कपिकन्दुकम् । न । शिरोस्थिनि ॥

कपिका । स्त्री । नीलसिन्दुवारवृक्षे ॥

कपिकेतनः । पुं । अर्जुनाख्यपाण्डवे ॥ कपि. केतन चिह्नमस्य ॥

कपिकोलि. । पु । कोलिविशेषे ॥

कपिचूडा । स्त्री । आम्रातकवृक्षे ॥

कपिचूत. । पुं । आम्रातके । आम्डा इतिभाषा ॥

कपिज. । पुं । तुरुष्के । सिल्हके । शिलारस इति गौडभाषा । नागौरी गूद इति भाषा ॥

कपिजाङ्घिका । स्त्री । तैलपिपीलिकायाम् ॥

कपिञ्जल. । पुं । तित्तिरौ ॥ कपिञ्जल इतिप्राज्ञैः कथितो गौरतित्तिर ॥ कपिञ्जल इतिख्यातो लोके कपिश तित्तिर इतिच ॥ चातकखगे ॥ ते जलोपक्षिणि ॥

कपितैलम् । न । तुरुष्कनामगन्धद्रव्ये । सिल्हके । नागौरीगूदइतिभाषा॥

कपित्थ । पु । कैथ इति प्रसिद्धेवृक्षे । कुचफले ॥ कपित्थोथदधित्थस्तु ग्राही फलसुगन्धक. । अक्षस्यन्दोदधिफल श्चिरपाकी कपिप्रियः ॥ कपित्थमामं सङ्ग्राहि कषायंलघु लेखनम् । पक्वं गुरु तृषाहिक्काशमनंवातपित्तजित् ॥ स्वाद्वम्लं तुवर कण्ठशोधनं ग्राहि दुर्जरम् ॥ अपिच ॥ कपित्थमाम कण्ठघ्नं विषघ्नं ग्राहि वातलम् । मधुराम्लकषायत्वात् सौगन्ध्याच्च रुचिप्रदम् ॥ कपयस्तिष्ठन्त्यत्र । कपिरिवतिष्ठतिवा । सुपिस्थ इतिक. । पृ० ॥

कपित्थत्वक । पुं । एलवालुके ॥

कपित्थपर्णी । स्त्री । कपित्थानीति गौडभाषाप्रसिद्धे वृक्षविशेषे । विरजायाम् । चित्रपर्ण्याम् ॥

कपित्थास्य । पु । वानरविशेषे । गोलाङ्गूले । दधिशोणे । नगाटने ॥

कपिध्वज । पुं । हनुमता महावीरेण ध्वजरूपतयाऽनुग्रहीते अर्जुने ॥ कपिर्हनूमान् ध्वजे अस्य ॥

कपिनामा । पु । सिल्हके ॥ कपिर्नामास्य ॥

कपिपिप्पली । स्त्री । रक्तापामार्गे । वशिरे ॥ हृद्यावर्त्तवृक्षे ॥

कपिप्रभा । स्त्री । कपिकच्छाम् ॥

कपिप्रभु । पु । रघुनाथे । श्रीरामे ॥ कपीनां सुग्रीवादीनां प्रभु. ॥ कपिराजे ॥

कपिप्रियः । पुं । आम्रातके ॥ कपित्थे ॥ कपीनां प्रियः ॥

कपिप्रिया । स्त्री । चिञ्चायाम् । तिन्तिडीकायाम् ॥ कपीनां प्रिया ॥

कपिरथ. । पु । श्रीरामे ॥ अर्जुने ॥

श्यामे। कृष्णपीतमिश्रितवर्णे॥ त्रि। तद्वर्णयुक्ते॥ कपिर्वर्णविशेषोऽस्यास्ति। लोमादित्वात् श॥ विरक्तसन्ध्याकपिशमित्यत्र कपिशं ताम्रमिति मल्लिनाथ.॥

कपिशा। स्त्री। माधव्याम्। माधुरीसुरायाम्॥ नदीविशेषे॥ टाप्॥

कपिशाञ्जन। पु। शिवे॥

कपिशापुत्र.। पु। पिशाचे॥

कपिशी। स्त्री। माधव्याख्यमदिरायाम्॥

कपिशीका। स्त्री। मदिरायाम्॥ इति त्रिकाण्डशेष.॥

कपिशीर्षम्। न। कपशीर्षे। प्राकाराग्रे॥

कपिशीर्षकम्। न। हिङ्गुले॥ खोडकशीर्षके। प्राकाराग्रे।

कपिष्ठल.। पुं। ऋषिविशेषे॥ कपिष्ठलोगोत्र इतिनिपातनात् षत्वम्॥

कपीज्य। पु। क्षीरिकावृक्षे॥

कपीतः। पु। श्वेतकुङ्कावृक्षे॥

कपीतन.। पु। गर्दभाण्डे॥ शिरीषवृक्षे॥ आम्रातके॥ अश्वत्थे॥ पूगवृक्षे॥ मालूरवृक्षे। बिल्वे॥ तनोति। तनुविस्तारे। पचाद्यच्। कपीनाम् कपेर्वर्णस्य वा तन.। अन्येषामपीतिदीर्घ.॥ यद्वा। या. लक्ष्म्या. तनः ईतनः। कपीनाकूपे वा ईतनः॥

कपीन्द्र। पु। हनूमति॥ सुग्रीवे॥ राघवे॥ वराहमूर्त्तौ॥ कपिश्चासाविन्द्रश्च। कपीनामिन्द्रो वा॥

कपीश। पु। हनुमति॥ कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम्॥ कपीनामीश॥

कपीष्ट.। पुं। राजादनवृक्षे॥ कपित्थे॥

कपूय। त्रि। कुत्सिते॥ कुत्सितं पूयते। पूयी विसरणे। पचाद्यच्। पृषोदरादि.॥

कपूयचरण.। त्रि। दुष्कृतिनि। कुत्सितकर्मणि॥ कपूयं निन्दितं चरणं कर्मास्य॥

कपोत। पु। पारावते। कलरवे॥ कपोतको गुरुः स्निग्धो रक्तपित्तानिलापहः। सङ्ग्राही शुक्रलः शीतः सुस्वादूरुचिकारक.॥ घुघुर्ती इति प्रसिद्धे चित्रकण्ठविहङ्गमे। धूसरे। धूम्रलोचने॥ कस्य वायोः पोत इव। कोवायु पोतो नौरिवास्य वा॥ यद्वा। कवते। कवृवर्णे। कबेरोतच्। पश्च॥ पश्चिमाचे॥

कपोतकम्। न। सौवीराञ्जने॥

कपोतचरणा। स्त्री। नलीनामगन्धवस्तुनि॥

कपोतपालिका। स्त्री। स्तम्भाग्रप्रसारिते दारुविशेषे॥ सौधादिप्रान्तेकाष्ठ

ादिति पचेङीष ॥

कफप्रकृतिक । त्रि । कफस्वभावे ॥ त ल्लक्षणं यथा। गम्भीरबुद्धिः स्थूलाङ्ग स्निग्धकेशो महाबलः। स्वप्नेजलाश्र यालोकी श्लेष्मप्रकृतिकोनर इति ॥

कफवर्द्धन.। पु। पिण्डीतगरवृक्षे॥ त्रि। श्लेष्मवृद्धिकारके ॥

कफविरोधि । न । मरिचे ॥

कफात । पु । कफनाशके ॥ कफमत्ति । अद० । क्विप् ॥

कफान्तक । पु। बर्बुरवृक्षे ॥ इतिराज निर्घण्ट ॥

कफारि । पुं। शुण्ठ्याम् ॥

कफी । पु । गजे । हस्तिनि ॥ त्रि । श्ले ष्मले । श्लेष्मणे । श्लेष्मयुक्ते ॥ कफो ऽस्यास्ति । वर्न्होपतापेतीनि ॥

कफेलू.। पु । श्लेष्मातके ॥ कफंलाति । लाआदाने । कृन्दूहन्भूजम्बूकफेलू कर्कन्धूदिधिषूरिति कुग्रन्थयो नि पातनादेत्वम् ॥

कफोणि । पु । कूर्परे । भुजमध्यग्रन्थौ । कोहणी इति भाषा॥ कं सुखं स्फो रयति । स्फुरस्फुरणे सञ्चलनेच । सुस्त्न्तः। अचड़ः॥ पृ० । यद्वा । केन सुखेन फणति स्फुरतिवा। फण० । स्फुर० । इन् । पृ० ॥

कफोणी । स्त्री । कूर्परे॥

कफोतक्षेत्र.। पु । कफस्य वमनायोप स्थितौ ॥

कबन्ध । पु । उदरे॥ धूमकेतौ ॥ रा हौ ॥ रक्षोविशेषे ॥ न । जले । उ दके ॥ पुं । न । क्रियायुक्तशिरशू- न्यकलेवरे ॥ कबन्धोऽस्त्रीक्रियायुक्त मपमूर्द्धकलेवरम् ॥ यथा । मनुष्या णा सहस्रेषुहतेषु हतमूर्द्धसु । त दावेशात्कबन्ध स्यादेकोऽमूर्द्धाक्रि यान्वित॥अपिच। नागानामयुतं तु रङ्गनियुतं सार्द्धं रथानाशत पत्तीनां दशकोटयोनिपतिता एक कबन्धो रणे । तादृक्कोटिकबन्धनर्त्तनविधौ खेलप्लवत्खेशिरस्तेषाङ्कोटिनिपात नेरघुपते कोदण्डघण्टारवः।इति प्राचीना ॥ कं सुखं बध्नाति। बन्धब न्धने। कर्मण्यण॥कंबध्यतेछिद्यतेऽ स्मात्। घञ्॥ केन वायुना बध्यतेवा। कोवायुरेवबन्ध आश्रयोयस्यवा॥

कबन्धी । पु । ऋषिविशेषे ॥

कबित्थ । पु । कपित्थवृक्षे ॥ कपयः ति ष्ठन्त्यत्र ष्ठा० । सुपिस्थ इतिकः। पृ०॥

कबिल । पुं । कपिलवर्णे ॥ त्रि । कपि लवर्णे ॥

कभम् । न । रोहिणीनक्षत्रे ॥

कम् । अ । पादपूरणे ॥ जले ॥ मस्त के॥ सुखे ॥ मङ्गले ॥ निन्दायाम्॥

कमलच्छद । पु । मन्नदले । पन्नपचे॥

कमलज । पुं । अजयोनौ । धातरि॥ कमले जात. । जनी । ड ॥

कमला । स्त्री । लक्ष्म्याम् । श्रियि ॥ कमलालयस्थाया देव्याम्॥ वरस्त्रियाम्॥कालकट्टादिपत्तने कमलानींबू इतिख्याते फलविशेषे। यथा । रम्भाफलं तिन्तिडीक कमलानागरङ्गकम् । कलान्येतानि भोज्यानि पथ्योऽन्यानि विवर्जयेदिति तत्त्वसारे पुरश्चरणप्रकरणम् ॥ काम्यते । कमु० । वृषा ०कलच् ॥ कमलम् अस्ति अस्याः । अर्शआद्यच्वा ॥ छन्दोविशेषे । यथा । दिगुणनगणसङ्गित:सगण इह विहित. । फणिपतिमतिविमला क्षितिप्रभवतिकमलेति ॥ सर्वेयान्तगैता कमला यथा । वसुभि.प्रमिता. सगणा विहिता पुनरेकमितो भि हितो गुरुरन्ते । यदिसत्वयो विलसन्मतयो ऽभिधयाकमलेतितदा कलयन्ते। विदधत्यनघारमणीयतया रसनापरिखेलितयाकुतुकान्ते । यशवन्तनरेशविशोभिशोधिकशोभितसाविदधातुमुदन्ते इति ॥

कमलालय । पु । सिद्धस्थानविशेषे ॥ यथा । कमलालयेमहास्थानेकमलाख्योमहेश्वर । कमलानमहेशानी सकलार्थप्रदायिनीत्यागमोक्ति ॥

कमलालया। स्त्री । लक्ष्म्याम् ॥ कमलमालयोयस्या ॥

कमलासन । पु । धातरि॥ कमलमासनमस्य ॥ न । आसनविशेषे ॥

कमलासनस्थ । पु । पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थे भगवन्नाभिकमलासनस्थे विधातरि ॥

कमलिनी । स्त्री । पद्मिन्याम् ॥ पद्मखण्डे । पद्माकरे ॥ कमलानि सन्त्यत्र । पुष्करादिभ्योदेशे इति इनि: ॥

कमलोत्तरम् । न । कुसुम्भपुष्पे ॥ कमलादुत्तरम् ॥

कमा । स्त्री । शोभायाम् ॥ इतिहारा-निर्घण्ट' ॥

कमिता । त्रि । कामुके ॥ कमेर्णिङ्भावे तृच् ॥

कम्प. । पु । गात्रादिचलने । वेपथौ । वेपने ॥ कम्पनम् । कपिकिम्पिचलने । भावे घञ् ॥

कम्पन । पु । शिशिरत्तौ ॥

कम्पनम् । त्रि । कम्प्रे । लोले । चञ्चले ॥ न । कम्पे ॥ कम्पनशील. । कपि० चलनशब्दार्थादितियुच् ॥

कम्पलक्ष्मा । पु वायौ ॥

कम्पाक । पु । वायौ ॥

कम्पितम् । न । कम्पने । वेपने । कम्पे

॥ त्रि । कम्पयुक्ते ॥ कम्प्यतेऽस्म । क
पि० । क्त ॥

कम्पिल्ल । पु । कम्पिल्लके । रक्ताङ्गे । कंबीला कामला इति च भाषा प्रसिद्धे द्रव्ये ॥ देशविशेषे ॥

कम्पिल्लक । पुं । कम्पिल्ले ॥

कम्र । त्रि । कम्पयुक्ते । अतिचञ्चले ॥ कम्पनशील । नमिकम्पीति र' ॥

कम्बर । पु । चित्रवर्णे । कर्बुरवर्णे ॥ त्रि । चित्रवर्णवति ॥

कम्बल: । पुं । नागराजे ॥ सास्नायाम् ॥ प्रावारे ॥ कृमौ ॥ वैकक्ष्ये ॥ स्वनामख्याते मेषादिलोमरचिते वस्त्रासनादौ । रल्लके ॥ मृगविशेषे ॥ न । जले । सलिले ॥ कम्यते । कमु० । कमेर्बुक्चेतिकल: ॥ कं कुत्सितं शिरोऽम्बु वा बलते । बलसंवरणे सञ्चरणे च । अच् ॥ कम्बति कम्ब्यते वा । कम्ब गतौ । वृषादित्वात् कलच् ॥

कम्बली । पुं । वृषे ॥ त्रि । कम्बलवति ॥ कम्बलोऽस्त्यस्य । इनि. ॥

कम्बलिवाह्यकम् । न । गन्त्र्याम् ॥ वृषवाह्ये शकटे ॥ कम्बला: सास्ना । सास्त्येषाम् । इनि: । कम्बलिभिर्वृषै वाह्यते । वह० ण्यत् । स्वार्थे कन् ॥

कम्बलीया । स्त्री । ऊर्णायाम् ॥ कम्बलाय हिता । असमासाश्रयत । तस्मै हितमिति छ' ॥

कम्बल्यम् । न । ऊर्णापलशते ॥ कम्बलाच्च संज्ञायामिति प्राक्क्रीतीयेष्वर्थेषु यत ॥

कम्बि: । स्त्री । खजाकायाम् । दर्व्याम् ॥ वंशांशे ॥ कम्यते । कमु० । बाहुलकात् विन ॥

कम्बु: । पु । न । शङ्खे ॥ पु । शम्बूके ॥ वलये ॥ हस्तिनि । गजे ॥ कर्चूरे ॥ ग्रीवायाम् ॥ नलके । पोवा इति भाषा ॥ काम्यते । कमु० । जम्ब्वादयश्चेतिनिपातित' ॥ कम्बति । कम्ब गतौ । मृगय्वादिर्वा ॥

कम्बुक: । पु । कम्बुशब्दार्थे ॥

कम्बुकण्ठी । स्त्री । कम्बुग्रीवायाम् ॥

कम्बुकाष्ठा । स्त्री । अश्वगन्धायाम् ॥

कम्बुग्रीवा । स्त्री । शङ्खाकृतित्रिरेखाढ्य ग्रीवायाम् ॥ कम्बु शङ्ख इव ग्रीवा तिस्रो रेखा यस्या ॥

कम्बुपुष्पी । स्त्री । शङ्खपुष्प्याम् ॥

कम्बुमालिनी । स्त्री । शङ्खपुष्प्याम् ॥

कम्बू: । पुं । वलये ॥ शङ्खे ॥ त्रि । परद्रव्यापहारिणि ॥ कम्बूरम्बूजम्बू कम्बूरित्युज्ज्वलदत्तोक्तपाठात् साधु: ॥

कम्बोज: । पु । हस्तिविशेषे ॥ शङ्खविशेषे ॥ देशविशेषे ॥ सयया । पञ्चन

दृष्टमुारभ्यमन्त्राहदिशापूर्वत'। क
म्बोजदेशो देवेशि वाजिराशिपरा
यणः ॥ इतितन्त्रशास्त्रम् ॥

कम्बातायी । पु । शङ्कचिल्ले ॥

कम्भारी । स्त्री । गम्भार्य्याम् ॥ कंजल
विभर्त्ति । डुभृञ्० । कर्मण्यण ।
ङीप् ॥

कम्भु । न । उशीरे ॥ इतिराजनि-
र्घण्ट' ॥

कम्रः । त्रि । कामुके । मैथुनेच्छाविशि
ष्टे ॥ कमनीये ॥ कामयते । कमु०
। नमिकम्पीतिरः ॥

करः । पुं । वर्षोपले ॥ रश्मौ ॥ पाणौ
॥ प्रत्याये । भागधेये । कर्षकादि द्वा
रा प्रत्येकस्थावरजङ्गमादादेयेरा
जग्राह्यभागे ॥ शुण्डायाम् ॥ हस्त
नक्षत्रे ॥ चतुष्कलेशेषगुरौ ॥ऽ
संज्ञायाम् ॥ कीर्य्यते । कृविक्षेपे ।
ऋदोरप् ॥ करोति वा । अच् ॥
कर्मोपपदेसति कर्त्तृवाचकोयंशब्दः
। यथा । आनन्दकर' ॥

करकः । पु । करकवृक्षे ॥ पक्षिविशेषे
॥ दाडिमवृक्षे ॥ करे ॥ लट्वायाम् ॥
पलाशवृक्षे ॥ कोविदारवृक्षे ॥ वकु
लवृक्षे ॥ करीरवृक्षे ॥ नारिकेला
स्थनि । माला इतिगौड भाषा ।
नरेलीकपाली इतिचभाषा ॥ पुं ।
न । करङ्के ॥ कमण्डलौ ॥ पुं । स्त्री ।
वर्षोपले ॥ कृणोति । कृञ् हिंसा
याम् । करोति दोषाभावं वा । कृ
आदिभ्यः संज्ञायांवुन् ॥

करकङ्कणन्याय । पु । कङ्कणशब्देनैव
करभूषणविशेषबोधसम्भवेऽपि क
रशब्दपूर्वक कङ्कणशब्द. करसलग्न
कङ्कणबोधार्थकइत्यर्थपरे दृष्टान्ते॥

करकच । पु । योगविशेषे ॥ यथा ।
शनिभार्गवजीवचक्रजसोमार्कवा
सरे । षष्ठ्यादितिथय सप्तक्रमात्
करकचा स्मृता इति ॥

करकच्छपिका । स्त्री । कूर्ममुद्रायाम् ॥

करकण्टक. । पुं । नखे ॥

करका । स्त्री । वर्षोपले । मेघोपले ।
ओलाइतिभाषा ॥ कृणोतेर्वुन्नन्ता
ट्टापि क्षिपकादित्वात् प्रत्ययस्थादि
तीत्त्वंन ॥

करकाजलम् । न । दिव्यपानीयप्रभेदे
॥ दिव्यवाय्वग्निसयोगात्सहता'खा
त्पतन्तिया । पाषाणखण्डवच्चाप
स्ता कारक्योऽमृतोपमा ॥ करका
जजलरूक्षंविशदगुरुचस्थिरम् । दा
रुण शीतलंसान्द्रपित्तहृत कफवायु
कृत॥

करकाम्भा. । पु । नारिकेलवृक्षे ॥

करग्रह. । पु । विवाहे ॥ करग्रहणे ॥

करञ्जी । स्त्री । उदकीर्य्यां । महाकरञ्जे ॥ करञ्जी स्तम्भिनी तिक्ता तुवरा कटुपाकिनी । वीर्य्योष्णा वमिवातार्शःक्रिमिकुष्ठप्रमेहजित ॥

करट. । पुं । गजगण्डे ॥ कुसुम्भवृक्षे ॥ निन्द्यजीवने ॥ एकादशाहादिश्राद्धे ॥ दुर्दुरूटे ॥ वायसे ॥ वाद्यविशेषे ॥ करोति शकुनम् । शकादिभ्यो ऽटन्॥ केति रटतिवा । रटशब्दे । पचाद्यच् ॥

करटकः । पुं । करटार्थे ॥ स्वार्थेकन् ॥

करटा । स्त्री । दुःखदोह्यायाङ्गवि ॥ अजाश्वतष्टाविति भदन्त तत्वष्टाप ॥

करटी । पुं । हस्तिनि ॥

करटिनी । स्त्री । हस्तिन्याम् ॥

करटुः । पु । कर्करेटौ । करकटियाइतिगौडभाषाप्रसिद्धपक्षिवि० ॥

करणम् । न । हेतौ । साधकतमे । क्रियासिद्धौ प्रकृष्टोपकारके ॥ यद्व्यापारानन्तर मव्यवधानेन फलोत्पत्तिस्तस्मिन्नित्यर्थं । तेनदात्रेण धान्यं लुनातीत्यत्रहस्तादे करणत्वेपि दात्रस्यैव करणत्वम् । तथाचोक्तम् । कारकाव्यवधानेपि क्रियानिष्पत्तिकारणम् । यद्विवक्षितं तेषुकरणत्व प्रकीर्त्तितमिति ॥ साधने ॥ कर्मणि ॥ तिथ्यर्द्धपरिमितेषु ववाद्येकादशसु ॥ यथा । ववाख्य बालवकौलवतैतिलगरवणिजविष्टयः सप्त । अगदुरथेति चराणि तिथिखण्डात्मकानि करणानि ॥ अथचराण्युत्तरशकलायामासस्यचतुर्दशीतस्या । शकुनिचतुष्पदनागकिंस्तुघ्नानि भवन्ति करणानि ॥ सितादे.करणंस्थेकोयाततिथ्यर्द्धसंख्यय. । सप्तभक्तोवशेषेणमितस्याद्भवतोगतम् ॥ चराणि विष्टिं करणान्यृते चसा भवन्ति सौम्याखिलकर्मसिद्धये । तथैवधीराश्चपितृकर्मणे विष्टिर्विघातादिविधौवराभवेदिति ॥ क्षत्रलेपे ॥ नृत्यप्रभेदे ॥ नृत्यविषयकाष्टोत्तरशतकरणविशेषेषु ॥ यथा । करणानान्तुसर्वेषा सामान्य लक्षणन्त्विदम् । प्रायोवामकरोवक्ष स्थितोन्य पुरतोनुगः ॥ पादाभ्यामूरूकरणंस्याय तदिहाष्टोत्तरंशतम् । निकुञ्चितंपार्श्वक्रान्तमतिक्रान्तंविवर्त्तकम् ॥ विद्युद्भ्रान्तं गजक्रीडं क्रान्तञ्च गरुडप्लुतमित्यादिसङ्गीतदामोदर ॥ गीतप्रभेदे ॥ क्रियाप्रभेदे ॥ व्रतबन्धे ॥ कायस्थसंहतौ ॥ कृतादौ ॥ क्षेत्रे ॥ गात्रे । काये ॥ संवेशने ॥ कायस्थे ॥ इन्द्रिये ॥ वर्णानांस्पष्टतादौ ॥ योगिनामासनादौ ॥ न्याय

करण

रणादिक्रियाणां सकर्मकत्वात् कि कर्म कतिविधञ्चेत्यत आह ॥ कार्य ञ्चतस्य दशधा हार्य न्धार्य प्रकाश्यञ्च । तस्य त्रयोदशविधस्य करणस्य दशधाकार्यम् । आहार्यम् धार्यम् प्रकाश्यञ्च । आहार्य व्याप्यम् कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दा ज्ञानेन्द्रियाणा शब्दस्पर्शरूपरसगन्धमया यथास्वं व्याप्याः । ते च दिव्यादिव्यतया दशधा । एवंधार्यमपि अन्त करणत्रयस्य प्राणादि लक्षणया वृत्त्या शरीरम् तच्च पार्थिवादि पाञ्च भौतिकम् शब्दादीना पञ्चाना समूह. पृथिवीति । तेच दिव्यादिव्यतया दशधेति धार्यमपि दशधा । एवं बुद्धीन्द्रियाणां प्रकाश्य दशधेति शब्दादीनांपञ्चानां दिव्यादिव्यभेदात् । करणानाङ् कार्यम् ॥

करणत्राणम् । न । मस्तके ॥

करणव्यापार. । पु । करणानां व्यापारे ॥ कारकविशेषः करणम् । नच व्यापारावेशविना कारकत्वमिति व्यापारमाह । तदाहरण धारण प्रकाशकरम् । तत्रकर्मेन्द्रियाणि वागादीनि आहरन्ति स्वस्वविषय यथा स्वमुपाददते स्वव्यापारेण व्याप्नुवन्तीतियावत् । बुद्ध्यहङ्कारमनासितु स्वहत्त्या प्राणादि लक्षणया धारयन्ति । बुद्धीन्द्रियाणितु प्रकाशयन्ति ॥

करणाधिप । पु । जीवे । हृषीकेशे ॥ श्रोत्रादिचतुर्दशेन्द्रियाणामधिपा यथा । श्रोत्रस्य दिक । त्वचोवात । चक्षुष सूर्य । रसनाया प्रचेता । घ्राणस्याश्विनौ ॥ वाचो वह्नि । हस्तस्य इन्द्र । पादस्य विष्णु । पायो मित्र । उपस्थस्य प्रजापति. ॥ मन सश्चन्द्र. । बुद्धेस्तुर्मुख. । अहङ्कारस्य शङ्करः । चित्तस्याच्युत इति ॥

करणाधिपाधिप. । पु । जीवस्येश्वरे ॥ करणाधिपस्य अधिप ॥

करणी । स्त्री । वैश्या च्छूद्रायामुत्पन्नायाम् ॥ ख्युडन्तात् ङीप् ॥

करणीय । त्रि । कर्त्तव्ये । कार्ये ॥ कृ ञोऽनीयर् ॥

करण्ड: । पु । मधुकोषे ॥ असौ । खड्गे ॥ कारण्डवे खगे ॥ दलाढके ॥ वंशादिरचिते भाण्डविशेषे । करंडी करण्डी इतिचभाषा प्रसिद्धे पुष्पादिधारणार्थे भाण्डे ॥ समुद्गे । सम्पुटे ॥ करोति । डुकृञ० । अण्डन्कृसृभृदृभ्यण्डन् ॥

करण्डा । स्त्री । कालखण्डे । यकृति ॥

मृषेय' ॥

करभः । पु । मणिबन्धा द्दाकनिष्ठं करस्य बहिर्भागे ॥ करिशावके ॥ उष्ट्रपुंसे । ओलाइतिभाषा ॥ उष्ट्रे ॥ नखनाम गन्धद्रव्ये ॥ कृणाति किरत्यनेन की र्यतेवा । कृविक्षेपे कृञ्हिंसायांवा । कृशृशलिकलिगर्दिभ्योऽभच् ॥ करे भातिवा । भादीप्तौ । सुतिकः ॥

करभकाण्डिका । स्त्री । उष्ट्रकाण्डीद्रव्ये ॥

करभञ्जिका । स्त्री । उदकीर्ये । करञ्ज्याम् ॥

करभप्रिया । स्त्री । क्षुद्रदुरालभायाम् ॥

करभवल्लभ. । पुं । कपित्थवृक्षे ॥ पीलुवृक्षे ॥

करभाद्गनी । स्त्री । क्षुद्रदुरालभायाम् ॥

करभी । पुं । हस्तिनि ॥

करभी । स्त्री । उष्ट्रयोषायाम् । मान्याम् ॥

करभीर. । पु । सिंहे ॥ इतिशब्दरत्नावली ॥

करभूषणम् । न । कङ्कणे ॥ करंभूषयति । करो भूष्यतेऽनेनवा । भूषअलङ्कारे । ल्युट् ॥ हस्ताभरणमात्रे ॥

करभोरू. । स्त्री । उत्तमस्त्रीविशेषणे ॥ करभइव ऊरूयस्याःसा । ऊरूत्तरपदादौपम्येइत्यूङ् ॥

करमट्ट. । पुं । गुवाकवृक्षे । तत्सुपारे ॥

करमरी । पुं । बंदुआइतिप्रसिद्धे । वन्दिनि ॥ इतित्रिकाण्डशेषः ॥

करमर्द्द. । पु । करमर्द्दके । करौंदाइतिभाषा ॥ करंमृद्नाति । मृदक्षोदे । कर्मण्यण् ॥ अथदीर्घफलाभ्यान्तु करमर्द्दद्वयं मतम् । करमर्द्दद्वयं त्वाम्लं गुरुतृषाहरम् ॥ उष्णं रुचिकरं प्रोक्तं पित्तरक्तकफप्रदम् । तत्पक्वं मधुरं रुच्यं लघु पित्तसमीरजित् ॥

करमर्द्दक. । पु । कृष्णपाकफले । करौंदाइतिभाषा । सुषेणे । अविग्ने ॥ करमर्द्दएव । स्वार्थेकन् ॥

करमर्द्दिका । स्त्री । वनकरमर्द्दके ॥ करमर्दोलघुफला सा ज्ञेया करमर्द्दिका ॥

करमर्द्दी । पुं । करञ्जवृक्षे ॥

करमर्द्दी । स्त्री । करमर्द्दकवृक्षे ॥

करमालः । पुं । खतमाले । धूमे ॥ इतिहेमचन्द्र. ॥

करमाला । स्त्री । करपर्वरूपमालायाम् ॥

करमुक्तम् । न । बरछीभाला इतिभाषाप्रसिद्धे अस्त्रविशेषे ॥

करम्ब । त्रि । आमिश्रे । मिश्रिते ॥ करोति । डुकृञ्° । कृकादिकदम्बवच्च ॥

करहाट । पुं । पद्मादिमूले । शिफा कन्दे ॥ मदनद्रुमे ॥ महापिण्डीत रौ ॥ देशविशेषे ॥ करहाटयति । घटद्दोसौ । ग्यन्त । कर्मण्यण ॥
करहाटकः । पु । मदनपादपे । मयन फल इति भाषा ॥ स्वार्थेकन् ॥ न । हस्तसम्बन्धिस्वर्णे ॥
कराट. । त्रि । विकटे । भयानके ॥
करामर्द. । पुं । करमर्दे ॥
कराम्बुकः । पु । अविघ्ने । सुषेणे ॥
कराम्लकः । पु । करमर्दे ॥
करायिका । स्त्री । कूटपूर्य्याम् । करां की इति गुजराती इतिच भाषा ॥
करारोटः । पुं । अङ्गुरीयके ॥
कराल. । पुं । गर्जनतैल इति गौड-भाषाप्रसिद्धे सर्जरसयुक्ततैले । भूनतैले ॥ भल्लाततैले ॥ राक्षसविशेषे ॥ दन्तरोगविशेषे । यथा । शनैः शनैः प्रकुरुते वायुर्दन्तसमाश्रित. । करालान् विकृतान् दन्तान् करालोन स सिध्यति ॥ न । कृष्णकुठेरके । श्यामतुलसी इतिभाषा ॥ वेसवारभेदे ॥ यथा । तप्तस्नेहे प चेत् पूर्वं वेसवारकसंज्ञकम् । पाकप्रापितवोरम्यं कराल इदके मतमिति ॥ त्रि । दन्तुरे ॥ तुङ्गे । उग्रे ॥ विकृते । भीषणे ॥ करेण लाति । ला० । आतश्चोपसर्गे इति सुपोति योगविभागाद्वा क. ॥ यद्वा । अलभूषणादौ । कर्मण्यण् ॥
करालक. । पु । करालार्थे ॥
करालत्रिपुटा । स्त्री । काञ्चिकायाम् । लङ्काधान्ये ॥
कराला । स्त्री । शारिवायाम् ॥
करालास्य । त्रि । दन्तुरवदने ॥ कराल दन्तुरमास्यं यस्य ॥
करालिक । पु । वृक्षे ॥ इति हेमचन्द्र ॥
करालित. । त्रि । भीषिते । पीडिते ॥
करालो । स्त्री । वह्नेः सप्तजिह्वान्तर्गतजिह्वाविशेषे ॥ देवीविशेषे ॥ व ह्वादिभ्यश्चेति पाक्षिको ङीष ॥
करास्फोटः । पु । आस्फोटिते । वक्षस्यस्य बाह्वोर्द्वितीयहस्तेनताडने ॥
करिक । पुं । अरिमेदवृक्षे । विट्खदिरे ॥
करिकणावल्ली । स्त्री । चविकावृक्षे ॥
करिका । स्त्री । नखव्रणे ॥ करिका नखरेखिकेति वैजयन्ती ॥
करिकुसुम्भः । पुं । नागकेशरचूर्णके ॥
करिगर्ज्जितम् । न । बृंहिते । हस्तिगर्जने ॥
करिणी । स्त्री । देवताभेदे ॥ धेनुकायाम् । हस्तिन्याम् ॥ इन्नन्तान्नान्तलक्षणो ङीप् ॥

करिदारकः । पु । सिंहे ॥

करी । पु । हस्तिनि ॥ करः शुण्डा अस्ति अस्य । इनि ॥ लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात् इयं हि श्रीर्यत्करिणः इतिवाग्भट. ॥

करिनासिका । स्त्री । यन्त्रविशेषे ॥

करिपत्रम् । न । तालीशपत्रे ॥

करिपिप्पली । स्त्री । गजपिप्पल्याम् । चविकाफले ॥ करीवपिप्पली इत्यप्युक्तात् ॥

करिपोत । पु । करिशावके ॥

करिबन्ध. । पु । प्रारब्धे । गजबन्धन स्तम्भे ॥ इतिहारावली ॥

करिमाचल । पु । सिंहे ॥

करिमुखः । पुं । गणेशे । विनायके ॥ करिणोमुख मिवमुख मस्य ॥

करिरतम् । न । रतबन्धान्तरे ॥ भूगत स्तनभुजास्यमस्तका मुन्नतं स्वयम धोमुखीं स्त्रियम् । क्रामति स्वकर कृष्टमेहने वल्लभे करिरतं तदुच्यते ॥ करिपदमिति पाठान्तरम् ॥

करिशावकः । पु । कलभे । हस्तिशिशौ ॥ करिणः शावक ॥

करिष्ठः । त्रि । अतिशयेन कर्त्तरि ॥ अतिशायने इष्ठन् । तुरिष्ठेमेयस्सु ॥

करिस्कन्धः । पुं । करीणां समूहे ॥ नरकरितुरगाणांस्कन्धत् ॥ शब्दार्णवे ॥

करीर. । पु । घटे ॥ ककरे । ग्रन्थिले । करील इतिभाषाप्रसिद्धे वृक्षे ॥ करीर कटुकस्तिक्त स्वेद्युष्णोभेदन. स्मृत । दुर्नामकफवातामगरशोथव्रण प्रणुत् ॥ पु । न । वंशाङ्कुरे ॥ कृणाति किरति कीर्यते वा । इतिसायाम् इतिश्चेपेवा । कृगॄशॄपॄकुटीति ईरन् ॥ करिणमीरयति वा । ईर० । कर्मण्यण ॥

करीरफलम् । न । कारीरे । टींटइति ख्याते ॥

करीरा । स्त्री । हस्तिदन्तमूले ॥ चीरिकायाम् । झिल्ल्याम् । झींगुर इतिभाषा । बनझींगर गौंदरा इति ख्याते कीटे ॥ अजादित्वाट्टाप् ॥

करीरिका । स्त्री । } दन्तिनान्दन्तमूले ॥
करीरी । स्त्री । } चीरिकायाम् ॥

करीषः । पुं । न । शुष्कगोमये । छगणे । छाँणा करसी इतिभाषा ॥ कीर्यते । इतिशेषे । इतृभ्यामीषन् ॥

करीषङ्कषा । स्त्री । वात्यायाम् ॥ करीष कृषति । कषहिंसायाम् । सर्वकूलाभ्रकरीषेषु कषइतिखच् । मुमागमः ॥

करीषाग्निः । पुं । छागणे । गोमयाग्नौ ॥

करुणः । पुं । करुणा-करौंदू इतिभाषाप्र

सिद्धे हत्त्वविशेषे ॥ शृङ्गाराद्यष्टरसान्तर्गततृतीये रसे ॥ इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् ॥ बुद्धभेदे ॥ सर्वभूताभयदातरि परमहंसपरिव्राजके ॥ त्रि । दीने ॥ सदये । दुःखितेषु दया करुणा तद्वति ॥ अर्श आद्यच ॥ करोति मनः । डुकृञ् । कृवृदारिभ्य उनन् ॥

करुणमल्ली । स्त्री । नवमल्लिकायाम् ॥

करुणविप्रलम्भ । पु । पूर्वरागादिचतुर्भेदविप्रलम्भशृङ्गारमध्ये विप्रलम्भविशेषे ॥

करुणा । स्त्री । कृपायाम् । दयायाम् । परदुःखहानीच्छायाम् ॥ दुःखितेषु कथन्नु नामैषा दुःखनिवृत्तिः स्यादिति कृपामेव भावयेन्नोपेक्षा न वाधर्मम् ॥ करणम् । कृवृदारिभ्य उनन् । टाप् ॥

करुणापर । त्रि । दयालौ । सुरते ॥

करुणामय । त्रि । कृपाप्राचुर्यवति ॥

करुणी । स्त्री । ग्रीष्मपुष्प्याम् । रक्तपुष्प्याम् । ककरखिरुणी इति कोकणभाषा ॥

करूष । पुं । देशविशेषे ॥

करेटः । पुं । नखे ॥

करेटव्या । स्त्री । धनच्छूमच्चिपि ॥

करेटु । पुं । स्त्री । कर्करेटौ । करकटियाइति गौडभाषाप्रसिद्धे विहगे ॥ के जले वायौ वा रेटति । रेटृ भाषणे । म्र° कु ॥

करेणु । पु । इभे । मतङ्गजे । गजे ॥ कर्णिकारवृक्षे ॥ स्त्री । हस्तिन्याम् ॥ करोति । कृञ्भ्यामेणुः ॥ केरेणुरस्येति वा ॥

करेणुभू । पुं । पालकाप्यमुनौ ॥

करेणुसुत । पु । मुनिविशेषे ॥ इभशावके । कलभे ॥ करेणोः सुत ॥

करेन्दुक । पु । भूतृणे ॥

करेवर । पु । तुरुष्के । सिह्लके ॥

करोटः । पु । न । शिरोस्थनि ॥ कं वायुं रोटते । रुट° । अच ॥

करोटि । स्त्री । शिरोस्थि ॥ कं वायुं रोटते । रुटदीप्तौ प्रतिघाते च । केन रुध्यते वा । इन् ॥ रोटयति वा । रुटिश्चुरादिः । अच इः ॥

करोटिका । स्त्री । शिरोस्थि । कपाले ॥ करोटिरेव । स्वार्थे कन् ॥

करोटी । स्त्री । करोटौ ॥ ङीष ॥

कर्क । पु । कर्केतने ॥ वह्नौ ॥ शुक्लाश्वे ॥ दर्पणे ॥ घटे ॥ चतुर्थराशौ ॥ कर्कटवृक्षे ॥ कुलीरे ॥ करोति कृणोति क्रियते वा । कृदाधारार्चिकलिभ्यः कः ॥

कर्कचिभिंटी । स्त्री । चिभिंटायाम् ।

कर्कटीभेदे ॥

कर्कट । पु । वृक्षविशेषे । क्षुद्रामलक सञ्ज्ञे । कर्कफले ॥ पक्षिवि० । कर्करेटौ ॥ जलजन्तुविशेषे । कुलीरे । काँकडा इतिभाषा ॥ मेषादिराश्यन्तर्गतचतुर्थराशौ ॥ जन्मकालीनचन्द्राश्रितैतद्राशिफलम् । श्रुतकलामलनिर्मलवृत्तय. सुकुसुमगन्धजलाशयकेलय । किल नरास्तु कुलीरगते विधौ वसुमत सुमतोऽर्थिनश्चय ॥ कर्किलग्ने समुत्पन्नो भोगी सर्वजनप्रिय । मिष्टान्नपानभोगी च जायते स्वजनप्रिय. ॥ वालुङ्क्याम् ॥ शाल्मलीफले ॥ स्त्रीयाकरणे ॥ कृणाति । कृहिं० । अन्येष्वपीतिविच् । कटति । कटे० । पचाद्यच् । कर्चासौकटश्च । अनुरादित्वात्रेफ. ॥ कर्केइति सौत्रोधातुः । शकादिभ्योटन्वा ॥ कर्कं श्वेतवर्णं टलति । टलगतौ । डो वा ॥

कर्कटक. । पुं । इक्षुविशेषे ॥ कुलीरे ॥ कर्कटएव । स्वार्थे कन् ॥

कर्कटशृङ्गिका । स्त्री ।<br>कर्कटशृङ्गी । स्त्री । } अजशृङ्ग्याम् ॥ महाघोषायाम् । कुलीरशृङ्ग्याम् । काँकडासींगी इतिप्रसिद्धायाम् ॥

कर्कटाख्या । स्त्री । कर्कटशृङ्ग्याम् ॥

कर्कटाधिप । पु । चन्द्रे ॥

कर्कटाह्व । पु । बिल्ववृक्षे ॥

कर्कटाह्वा । स्त्री । कर्कटशृङ्ग्याम् ॥

कर्कटि । स्त्री । वालुङ्क्याम् । इर्वारौ ॥ शाल्मलीफले ॥ कर्कं कटति । कटे० । सर्वधातुभ्यइन् । शकन्ध्वादिषु पररूपं वाच्यम् ॥

कर्कटिनी । स्त्री । दारुहरिद्रायाम् ॥

कर्कटी । स्त्री । इर्वारौ । वालुङ्क्याम् । ककडी इतिभाषा ॥ कर्कटी शीतला रूक्षा ग्राहिणी मधुरा गुरुः । रुच्या पित्तहरा सामा पक्वा मन्दाग्निपित्तकृत ॥ अस्या पाकप्रकारस्तु । त्यक्तबीजशिता प्रौढा गुलिकाकारखण्डिता । तलिता सुष्ठु ते तसे कर्कटीवासशेशिता ॥ विपाकुस्वयं हृतदुग्धसार्द्धं विभाविर्तवलमर्केराभ्याम् । कृतैवमासभ्यकटुष्या मेतत् प्रतिश्यायरोषममातनोति ॥ शाल्मलीफले ॥ देवदालीलतायाम् ॥ कर्कटशृङ्गीवृक्षे ॥ घोटिकावृक्षे ॥ कर्कं कटति । कटे० । इन् । पक्षेङीष् । शकन्ध्वादिः ॥

कर्कटु । पु । करेटुपक्षिणि ॥

कर्कन्धू । पुं । स्त्री । कोलिपादपे । बदरीवृक्षे ॥ बदरीफले । बेर इतिभाषा । कर्कन्धु क्षुद्रबदरं कपिसम्

पूर्व्वसूरिभिः । अम्लं स्यात् क्षुद्रबदरं कषायं मधुरं मनाक् ॥ स्निग्धं गुरु च तिक्तञ्च वातपित्तापहं स्मृतम् । शुष्कं भेद्यग्निकृत् सर्व्वं लघु तृष्णाक्लमास्रजित् ॥ दैत्यान्तरे ॥ कर्कं दधाति । डुधाञ् ० । अन्दूदृन्भूजम्बिति निपातितः कू प्रत्ययान्तः । कर्कं दधाति वा । निपातनान्नुम् ॥

कर्क्करः । पुं । दर्पणे । मुकुरे ॥ न । चूर्णाञ्जनकक्षुद्रपाषाणखण्डे । चूर्णखण्डे । कङ्कर काँकर इति च भाषा ॥ भङ्गुरे ॥ त्रि । कठिने । दृढे ॥ कर्कनम् । कर्कहासे । घञ् । कर्कं राति । रा० । आतोऽनुपेति कः ॥

कर्क्कराङ्गः । पुं । काककण्ठविहङ्गमे । खञ्जने ॥

कर्क्कराटुः । पुं । कटाक्षे ॥ इति कश्चित् जटाधरः ॥

कर्क्कराटुकः । पुं । कर्क्करेटुपक्षिणि ॥

कर्क्करान्धुकः । पुं । अन्धकूपे ॥

कर्क्करालः । पुं । चूर्णकुन्तले ॥

कर्क्करिका । स्त्री । घर्षे । नेत्रवस्त्र्याम् ॥

कर्क्करी । स्त्री । गलन्तिकायाम् । सनालजलपात्रे । झारी इति भाषा ॥ कठिनायाम् ॥ कन्दोर्द्धतपक्वनिष्कासनसाधने । झाँझरा इति च भाषा ॥ गौरादित्वात् ङीष् ।

कर्क्करीका । स्त्री । गलन्तिकायाम् । कर्कर्याम् ॥ फर्फरीकादित्वात् साधु ॥

कर्क्करेटम् । न । अर्द्धचन्द्रे । अङ्गुलितोरणे । गलेहस्ताधाने ॥

कर्क्करेटुः । पुं । करेटौ । करकटिया इति गौडभाषाप्रसिद्धे खगे ॥ कर्कैतिरेटति । रेटृ भाषणे । मृगय्वादि ॥

कर्क्कशः । पुं । काम्पिल्लवृक्षे ॥ कासमर्द्दे ॥ इक्षौ ॥ खड्गे ॥ त्रि । साहसिके ॥ क्रूरे ॥ दृढे ॥ अमसृणे । खरस्पर्शे । दुःस्पर्शे ॥ निर्द्दये ॥ कृणोति । कृञ् हिंसायाम् । अन्येभ्योऽपीति विच् । कशति । कश शब्दे । पचाद्यच् । कर् चासौ कशश्च ॥ यद्वा । करे कशति । कशः पचाद्यच् । अन्तर्भावितण्यर्थो वा ॥ शकन्ध्वादिः । कर्कान्मत्वर्थे लोमादित्वात् शो वा ॥

कर्क्कशच्छदः । पुं । शाखोटवृक्षे ॥ पटोले ॥

कर्क्कशच्छदा । स्त्री । कोशातक्याम् । तोरञ्जी इति भाषा ॥ दग्धरुहायाम् ॥

कर्क्कशदलः । पुं । पटोले ॥

कर्क्कशदला । स्त्री । दग्धारुहे ॥

कर्क्कशवाक्यम् । न । निष्ठुरवचने । परुषवाचि ॥

कर्क्कोटकी । स्त्री । पीतघोषायाम् । महाजाल्याम् । खखसा इति ख्याते फले ॥ कर्कोटकीफलं कुष्ठहल्लासारुचिनाशनम् । श्वासकासज्वरान् हन्ति कटुपाकञ्च दीपनम् ॥ ईषद्भिन्नमरिचै परिपूर्णगर्भं तैलेन रन्धितसुसैन्धवपातयोगम् । वाह्लीकयुक्तपयसा विहिताभिषेकं कर्कोटकीफलमिदं रुचिकृत्तकग्रम् ॥

कर्क्कोटिका । स्त्री । ककोडा इतिभाषाप्रसिद्धे । कर्कोटके । कूष्माण्ड्याम् ॥

कर्क्कोटी । स्त्री । कर्कोटिकायाम् ॥

कर्च्चरिका । स्त्री । कचोरीतिश्रुते पिष्टकप्रभेदे ॥ इतिपाकराजेश्वरः ॥

कर्च्चरी । स्त्री । कचरीतिश्रुतेफले ॥ चीराम्लकृतसंस्कारा शुष्का लेहविपाचिता । अरोचकादिरोगाणां कर्चरी कण्ठकर्त्तरी ॥ कर्चरी रुचिकृद्बल्या सुस्वादुरतिलेखनी । उष्णा पित्तकरी प्रोक्ता कफ कृत सारिका स्मृता ॥

कर्च्चूर । पु । कचूर इतिभाषा प्रसिद्धे गन्धसारे । द्राविडे ॥ कर्चूरो दीपनो रुच्य. कटुक स्तिक्त एवच । सुगन्धि कटुपाक. स्यात् कुष्ठार्शो व्रणकासनुत् ॥ उष्णो लघुर्हरेच्छ्वासगुल्मवातकफ क्रिमीन् ॥ शब्दाम् ॥ न । स्वर्णे ॥ कर्जति । कर्जव्यथने । खर्जूरादित्वादूर । प्र० ॥

कर्च्चूरक । पुं । द्राविडके । कचूर इति भाषा ॥ स्वार्थे कन् ॥

कर्ण । पुं । पृथायाज्येष्ठसुते । वसुषेणे । चम्पापतौ ॥ सुवर्णालिहृत्ते ॥ श्रवणेन्द्रिये । श्रोत्रे ॥ गुरुयुगले ऽऽ ॥ अरित्रे ॥ कीर्यते शब्दग्रहणाय क्षिप्यते यद्वा कीर्यते शब्दो ऽस्मिन् किरतिशरीरे सुख वा । क्वचित्पे । क्वृकृसीतिनन् । वाहुलकात्गुण ॥ यद्वा । कर्णयति । कर्णभेदने । अदन्त । अच ॥ यद्वा । करोति शब्दतानम् । डुकृञ् । क्वृदृत्यादिना नन् ॥

कर्णकण्डु । पुं । कर्णरोगविशेषे ॥ तस्यनिदानं यथा । मारुत कफसंयुक्त कर्णकण्डुं करोतिचेति ॥

कर्णकीटी । स्त्री । कर्णजलौकायाम् । शतपद्याम् । कानसलाई इतिभाषा ॥

कर्णक्ष्वेड. । पुं । कर्णरोगविशेषे ॥ वायु पित्तादिभिर्युक्तो वेणुघोषसमं स्वनम् । करोतिकर्णयो. क्ष्वेडकर्णक्ष्वेड. सउच्यते ॥ इति माधव ॥

कर्णगूथम् । न । कर्णमले ॥ कर्णखगूथम् ॥

कर्णगूथक. । पु । कर्णरोगविशेषे ॥ पित्तोष्मशोषित श्लेष्मा जायते कर्णगूथकइत्यस्य निदानम् ॥

कर्णचाप । पु । कान्तपृष्ठाख्येधनुषि ॥ कर्णस्य राधेयस्य चाप ॥

कर्णजलौका । पु । शतपद्याम् । गोजर कानखजूरा इतिभाषा ॥

कर्णजलौका । स्त्री । शतपद्याम् । चित्राङ्ग्याम् । कानसलाई इतिभाषा ॥

कर्णजाहम् । न । कर्णस्यमूले ॥ तस्य पाकमूलइत्यादिना जाहच प्र० ॥

कर्णजित् । पु । अर्जुने । गुडाकेशे ॥ कर्णं जयति । जि० । सत्सूद्विषे त्यादिनाक्विप् । तुक् ॥

कर्णदर्पण. । पुं । ताडङ्कनामनि कर्णभूषणे । कानलटका इतिभाषा ॥

कर्णदुन्दुभि. । स्त्री । शतपद्याम् ॥

कर्णधार' । पु । नाविके । काण्डारि इतिगौडभाषा । मल्लाह माँझी इति भाषा ॥ कर्णमरित्रम् धरति । धृञ्० । कर्मण्यण् ॥

कर्णपाली । स्त्री । कर्णभूषणे । कान बाला बाली इत्यादिभाषा प्रसिद्धे ॥ कर्णपालिप्रदेशयोः ॥

कर्णपिशाची । स्त्री । देवीविशेषे ॥

कर्णपूः । स्त्री । कर्णपुरे । चम्पायाम् ॥

कर्णपुरम् । न । चम्पानगर्याम् । मालिन्याम् ॥

कर्णपुष्प । पु । मोरटलतायाम् ॥

कर्णपूर. । पु । शिरीषवृक्षे ॥ नीलोत्पले ॥ अवतंसे । कर्णभरणे ॥ अशोकवृक्षे ॥ कर्णम्पूरयति । पूरि० । कर्मण्यण् ॥

कर्णपूरक. । पुं । कदम्बवृक्षे ॥ न । शिरीष ॥ नालोत्पले ॥ वतंसे ॥

कर्णप्रतिनाह । पु । कर्णरोगविशेषे ॥ तस्य सम्प्राप्तिरूपे यथा । सकर्णगूथो द्रवता यदा गतो विलायितो घ्राणमुखम्प्रपद्यते । तदा स कर्णप्रतिनाहसंज्ञितो भवेद्विकार शिरसोऽर्द्धभेद कृदिति ॥

कर्णफल. । पु । कार्णिक माच इति गौड प्रसिद्ध मत्स्यविशेषे ॥

कर्णभूषणम् । न । कर्णाभरणे ॥

कर्णमलम् । न । कर्णगूथे ॥

कर्णमुकुर । पुं । ताटङ्कनाम्नि कर्णभूषणे ॥

कर्णमोटिका । स्त्री । } चामुण्डादेव्याम् ॥
कर्णमोटी । स्त्री । }

कर्णरोगः । पुं । श्रोत्रव्याधौ ॥

कर्णलतिका । स्त्री । पाल्याम् । कानकापना इति भाषा इतिहेमचन्द्रः ॥

कर्णवंशः । पुं । मञ्चे ॥ इतिशब्दार्णवः ॥

कर्णवर्जितः । पुं । सर्पे ॥ त्रि । बधिरे ॥

कर्णवेधः । पुं । कर्णघटकदोषनिवारणार्थं कर्णयोर्वेधने ॥ सोदरभ्रात्रूणां संस्काराणाञ्च पौर्वापर्यक्रमः । कर्णवेधस्याऽसंस्काररूपत्वात न तथा नियम । यथा । यदापत्यद्वयतिष्ठेत् सम्भवोप्यपरस्यच । कर्णघटकं विजानीयाच्छितं तत त्रयस्यच ॥ इत्याशङ्क्य तयो र्मध्ये शुद्धिर्यस्याथ वत्सरे । कर्णवेधोहितस्तस्य नात्रज्येष्ठविचारणा ॥ षट्कर्णोत्पत्तिमाशङ्क्य भानो शुद्धासमेपिच । कर्णवेध्यो न दोषः स्यादन्यथा मरणम्भवेत् ॥ इतिमाण्डव्य. ॥

कर्णवेधनी । स्त्री । हस्तिकर्णवेधनास्त्रे । कर्णारायाम् ॥ इतित्रिकाण्डशेष. ॥

| | |
|---|---|
| कर्णवेष्ट. । पु ।<br>कर्णवेष्टकम् । न ।<br>कर्णवेष्टनम् । न । | कुण्डले ॥ कर्णस्य वेष्टनम् ॥ |

कर्णशष्कुली । स्त्री । वेष्टने । कर्णगोलके ॥ कर्णमध्यवर्त्त्यौकाशे ॥

कर्णशूल. । पु । कर्णरोगविशेषे ॥

कर्णसंस्राव. । पु । कर्णरोगविशेषे ॥ तस्य निदानसम्प्राप्तिरूपाणि यथा । शिरोभिघातादथवा निमज्जतोजले प्रपाकादथवापि विद्रधेः । स्रवेद्धिपूयं श्रवणोऽनिलार्द्दितःसकर्ण संस्राव इति प्रकीर्त्तित इतिमाधवः ॥

कर्णस्फोटा । स्त्री । कानफाटा इतिगौड भाषा प्रसिद्धे लताविशेषे । कृष्णतण्डुलायाम् ॥

कर्णाट. । पु । देशविशेषे ॥ यथा । रामनाथ समारभ्य श्रीरङ्गान्तं विलेश्वरि । कर्णाटदेशो देवेशि साम्राज्यभोगदायक ॥ इतिशक्तिसङ्गमतन्त्रम् ॥

कर्णाटी । स्त्री । रागिणीविशेषे । मालवरागस्य नार्याम् ॥ हंसपदीवृक्षे ॥

कर्णानुज. । पुं । युधिष्ठिरे नृपे । अज्ञातशत्रौ । कर्णस्य अनुज ॥

कर्णान्दु । स्त्री । कर्णपाल्याम् । कानतडक्का इति भाषा ॥ उत्तप्तचित्तिकायाम् । कानकडा इतिगौडभाषा प्रसिद्धे कर्णाभरणविशेषे ॥

कर्णान्दू । स्त्री । कर्णपाल्याम् ॥

कर्णाभरणकः । पुं । आरग्वधवृक्षे ॥

कर्णारा । स्त्री । नाल्याम् । कर्णवेधन्याम् ॥

कर्णारि । पु । अर्जुनपाण्डवे ॥ नदीसर्जवृक्षे ॥

कर्णास्फाल. । पु । करिणः कर्णचालने । [illegible]यायाम् ॥

कर्णि. । पु । कर्णाकारफलके वाणे ॥

कर्णिक । त्रि । कर्णिले ॥ विस्तृतौ कर्णौ यस्य । तुन्दादिषु स्वाङ्गाद्विवृद्धावितिठक ॥

कर्णिका । स्त्री । करिहस्ताग्रे । पुष्करे ॥ करमध्याङ्गुलौ ॥ समुकादिच्छटोग्रे । बोटा इति गौड भाषा ॥ पद्म वराटे । बीजकोषे ॥ कर्णाभरण विशेषे । तालपत्रे । ढेढी इति भा ॥ लेखन्याम् ॥ कुट्टन्याम् ॥ अग्नि मन्थवृक्षे ॥ अजशृङ्गीवृक्षे ॥ कर्णस्या अङ्कुर कर्णभवो अङ्कुरो वा । कर्णललाटादितिकन् ॥

कर्णिकाचल । पु । } सुमेरुपर्वते ॥
कर्णिकाद्रिः । पुं । }

कर्णिकार । पुं । आरग्वधविशेषे । प्रग्रहे । कृतमालके । सोंदाल [illegible] इति भाषा ॥ कर्णिकार कटुस्तिक्त स्तुवर. शोधनो लघु. । रञ्जन सुखद. शोथश्लेष्मास्रव्रणकुष्ठजित् ॥ द्रुमोत्पले । कणियार इति गौडभाषा ॥ कर्णिकामियर्त्ति । ऋगतौ । कर्मण्यण् ॥

कर्णिकारक. । पुं । द्रुमोत्पले ॥ कृतमाले । सुवर्णके ॥ स्वार्थे क ॥

कर्णिकी । पुं । हस्तिनि ॥ न । अम्बुजे ॥ कर्णिका अस्ति अस्य । व्री० इनिः ॥

कर्णी । पुं । वर्षपर्वतसमकाण्डगतपर्व तविशेषे ॥ आरग्वधे ॥ कर्णिके ॥ विस्तृतौ कर्णौ यस्य । तुन्दादिभ्यश्चेति चकारादिनि ॥

कर्णिल । पु । कर्णिनि । कर्णिके ॥ विस्तृतौ कर्णौ यस्य । तुन्दादित्वात् पक्षे इलच् ॥

कर्णीरथ । पु । स्कन्धवाह्ययाने । प्रवहणे । स्वर्गरिया [illegible] डोला मीनस पालकी तानयान इत्यादि भाषा प्रसिद्ध ॥ कर्णसाध्या अथवा क्रिया उपचारात् कर्ण । कर्णोऽस्यास्ति । इति । कर्णीचासौ रथश्च । शब्दभाषेणरथो नवसन्तोरथ ॥ यद्वा । सामीप्यात् कर्णशब्देन स्कन्धोलक्ष्यते । सोऽस्त्यस्य वाहकत्वेन । इति । कर्णी चासौ रथश्च । अन्येषामपीतिदीर्घ. ॥

कर्णीवान् । पु । आरग्वधे ॥

कर्णीसुत. । पुं । कंसासुरे । मूलदेवे ॥

कर्णेजप । त्रि । सूचके । पिशुने । दुर्जने । खले ॥ कर्णे जपति । जप० । सप्तम्यां जपेरित्यच् । हलदन्तादित्यलुक् ॥

कर्णेन्दु । पुं । उत्तरपिपासिकायाम् । अर्द्धचन्द्राकृतिकर्णाभरणे ॥ कर्णमात्याम् ॥

कर्ण्यम् । त्रि । कर्णहिते ॥ कर्णयोर्हित

म् । शरीरावयवाद्यत ॥

कर्त्तनम् । न । छेदने ॥ नारीणां सूत्र निर्म्मितौ । कातना इतिभाषा ॥ कृ ती० । ल्युट् ॥

कर्त्तरी । स्त्री । कृपाण्याम् ॥ पत्रीसूत स्वर्णादि कर्त्तनोपाये । कातकाती इतिभाषा ॥ नापितोपकरणविशेषे । कैंची इतिभाषा ॥ योगविशेषे ॥ यथा । क्रूरमध्यगतश्चन्द्रो लग्नंवा क्रूरमध्यगम् । कर्त्तरी नामयोगोय कृन्यानिधनकारक इति ॥ अपिच । लग्नात् पापाद्दृजुवक्रव्ययार्थस्थौ य दातदा । कर्त्तरी नाम सा ज्ञेया मृत्युदारिद्र्यशोकदेति ॥ कृन्तति । कृतीछेदने । वाहुलकादर । यद्वा । कर्त्तनम् । घञ् । कर्त्तं राति । रादाने । आतोनुपेतिक. । गौरादित्वान्ङीष ॥

कर्त्तव्यम् । त्रि । करणीये । करणयो ग्ये । कार्य्ये ॥ यस्मिन क्रियमाणे न दोष स्तत्कर्त्तव्यम् ॥ तव्यप्रत्यय ॥

कर्त्ता । पुं । परमेष्ठिनि ॥ ज्वगनिवन्धने दाक्षे । कीर्यते विक्षिप्यते इतस्तत श्चाल्यते कायो येन । कृ विक्षेपे । तृ च ॥ त्रि । स्वतन्त्र. कर्त्तेतिनिरूपि तेषटकारकान्तर्गतकारकविशेषे ॥ अ



भक्तिर्भवति । तस्यलक्षणम् । क्रियानुकूलकृतिमत्त्वं कर्तृत्वम् ॥ य. करोतिस ॥ कृत्याश्रयः कर्त्तेति तार्किका ॥ चेतनान्तर व्यापारा व्यवधानेन धात्वर्थनिष्पादकश्चेतन. कर्त्ता । कर्मकरणादिकारकचक्रप्रयोक्तावा । इति प्रायश्चित्तविवेक. ॥ कृतिमति ॥ उत्पादके ॥ कारणानुकूलव्यापारवति । अनुष्ठातरि ॥ धातूपात्तव्यापाराश्रये ॥ क्रियायांस्वातन्त्र्येण विवक्षितेऽर्थे ॥ सतुपञ्चविध. । यथा । क्रियामुख्यो भवेत् कर्त्ता हेतुकर्त्ता प्रयोजक । अनुमन्ता ग्रहीता च कर्त्तापञ्चविधः स्मृतइति ॥ स त्रिविधोपिभवति । यथा । त्रिधैव ज्ञायते कर्त्ता विशेषेण प्रतिक्रियाम् । योग्यत्वमप्रतिषिद्धत्वविशेषणपदान्वयै. ॥ अस्यार्थः ॥ क्रियांप्रति प्रकारत्रयेण कर्त्ता विज्ञायते तस्य विवरणम् । स्वाध्यायोऽध्येतव्य इत्यत्र यो ग्यत्वेन लब्धविद्यत्रैवर्णिक. । १ । अक्षरं दद्यात् दीक्षितो न ददातीत्यत्र प्रतिषिद्धत्वेन दीक्षितेतर८८ । २ । स्वर्गकामोयजेतेत्यत्र विशेषणपदान्वयेन स्वर्गकाम कर्त्ता ज्ञायते । ३ ॥ अहङ्करोमीत्याद्यभिमानवति ॥ ज्ञानशक्तिप्रधानपञ्चीकृतपञ्चम

ह्यभूतकार्यो ऽहङ्कारोऽस्य कर्त्तृत्वं तु द्विर्विज्ञानमित्यादिपर्यायशब्दवाच्यत्वादात्माध्यासेनात्मनि कर्त्तृत्वादिधर्माध्यारोपहेतुः अनात्मा भौतिको मायाकल्पितश्च सः ॥ क्रियाश्रये । इतरकारकाप्रयोज्यत्वे सति सकलकारकाणां प्रयोक्तरि क्रियाया-निर्वर्त्तके चिदचिद्ग्रन्थिरूपे चलकामनायति पुरुषे ॥ स च सात्त्विकादिभेदात् त्रिविधउक्तो भगवता । तत्र सात्त्विको यथा । मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः । सिद्ध्यसि-द्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते इति ॥ राजसो यथा । रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः । हर्षशोकान्वितः कर्त्ता राजसः परि-कीर्त्तितः इति ॥ तामसो यथा । अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः । विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते इति ॥ अन्तः करणोपहिते चिदाभासे ॥ करणोपहित-स्य कर्त्तृत्वात् ॥ करोति । कृञ्० । तृच् तृन् वा ॥

कर्त्तृका । स्त्री । क्षुद्रखड्गे ॥

कर्त्तृत्वम् । न । कर्त्तृधर्मे ॥ भावेकर्मणिवा त्वः ॥

कर्त्त्री । स्त्री । कारिकायाम् ॥ करोति । कृञ्० । ण्वुल्तृचाविति तृच् । ऋन्नेभ्यो ङीप् ॥ छुरिकायाम् ॥

कर्द । पुं । कर्दमे ॥ कर्दति । कर्द कु-त्सिते शब्दे । पचाद्यच् ॥

कर्द्दट. । पुं । करहाटे ॥ पङ्के ॥ पङ्कारे ॥

कर्द्दनम् । न । कुक्षिशब्दे ॥

कर्द्दम । पुं । ब्रह्मणश्छायाया मुत्पन्ने प्रजापतिविशेषे । कपिलमुनेर्जनके । पापे ॥ पङ्के । कीच काद इति भाषा ॥ न । मांसे ॥ कर्दति । कर्द० । कलिकर्दोरमः ॥ त्रि । कर्दमवति ॥ अर्श० अच् ॥

कर्द्दमक. । पुं । शालिविशेषे ॥

कर्द्दमाटकः । पुं । विष्ठादिनिक्षेपस्थाने । यथाह द०भा० ॥ इतिशब्दरत्नावली ॥

कर्द्दमी । स्त्री । मुद्गरे । मोगरा इति भाषाप्रसिद्धे पुष्पे ॥ इतिवैद्यकम् ॥

कर्पट. । पुं । न । चक्कले । जीर्णवस्त्रे । चक्ता इति भाषा ॥ प्रस्वेदादिमार्जनार्थं हस्तस्थवस्त्रखण्डे । इन्द्रियं येन पूयते तत्रक्कंठे । यत्तास कर्पटयुक्तो तत्तुल्येवक्षेपितर्जैते इति स्वामी । मुकुटस्तु मलिनत्वादिदुष्टजीर्णवस्त्रखण्डेषु वर्त्तते इत्याह ॥ किरति कृत्यादिषा । क्षिपति हिंसायां वा । करोति वा । क्विप् । करं चासौ पटश्च ॥ यथा । कर्पटपटाः मर्मांश्चादि ॥

पर्वतविशेषे ॥

कर्पटधारी । त्रि । मलिनजीर्णवस्त्रधारिणि भिक्षुके ॥

कर्पटिकः । त्रि । कर्पटान्विते । कर्पटधारिणि ॥

कर्पटी । त्रि । कर्पटान्विते ॥ अ० इनि ॥

कर्पर. । पुं । मूर्द्धास्थिनि । कपाले । खोपरी इति भाषा ॥ शस्त्रविशेषे ॥ कटाहे ॥ कल्पते । कृपूसामर्थ्ये । बाहुलकादरो लत्वाभावश्च ॥

कर्पराशः । पु । स्वल्पकपालखण्डे ॥

कर्परालः । पुं । अखोटे । कन्दराले ॥ कर्परम् अलति । अलभू० । कर्मण्यण् ॥

कर्परिकातुत्थम् । न । तुत्थविशेषे । कर्पर्याम् ॥ गुडूचीयोगआञ्जने ॥

कर्परी । स्त्री । दार्विकायाम् । काथोद्भवतुत्थे । दारुहरिद्रायाः काथस्य तुत्थे । आवर्त्तननिष्पन्ने कृत्रिमरसाञ्जने । कल्पते । कृपू० । बाहुलकादरट् लत्वाभावश्च । टित्वान्ङीप् ॥

कर्परीतुत्थकम् । न । रसके । खपरिया थोथा इति ख्याते ॥ कर्परीतुत्थकं तुत्थादन्यत् तद्रसकं स्मृतम् । ये गुणास्तुत्थके प्रोक्तास्ते गुणा रसके स्मृताः ॥

कर्पासः । पुं । न । तूलिकायाम् । वस्त्रयोनौ ॥ क्रियते । डुकृञ्० । कृञः पास' ॥

कर्पासफलम् । न । कार्पासे । विनौला इतिभाषा ॥ कर्पासफलमिष्युक्तं कषायं मधुरं गुरु । वातश्लेष्महरं रुच्यं विशेषेणास्थिवर्जितम् ॥

कर्पासी । स्त्री । कार्पास्याम् । कपासकावृक्ष इति भाषा ॥ कर्पासात् जातित्वात् गौरादित्वाद्वा ङीष् ॥

कर्पूर' । पुं । न । घनसारे । चन्द्रसंज्ञे । सिताभ्रे । कपूर इति भाषा ॥ कर्पूरः शीतलो वृष्यश्चक्षुष्यस्लेखनो लघुः । सुरभिर्मधुरस्तिक्तः कफपित्तविषापहः ॥ दाहतृष्णास्यवैरस्यमेदोदौर्गन्ध्यनाशनः ॥ कर्पूरो द्विविध प्रोक्तः पक्वापक्वप्रभेदतः । पक्वात् कर्पूरत प्राहु रपक्वं गुणवत्तरम् ॥ अपिच । कर्पूरो नूतनस्तिक्त' स्निग्धश्चोष्णास्रदाहद' । चिरस्थो दाहशोषघ्न' सधौत' शुभकृत् परः ॥ पोतासभीमसेनाद्यो ऽस्य भेदा भ्वसन्ति । ते च भीमसेने द्रष्टव्याः ॥ किरति कृणाति वा । करति करोति वा । क्षिपे हिंसायां वा । कृञ्० डुकृञ्० वा । क्विप् । पूर्यते पूरी० । इगुपधेतिकः । कर् चासौ पूरश्च ॥ यद्वा । कल्पते । कृपू० । ख० ऊरः । बाहुलकाल्लत्वा भा-

नेन वा ॥

कर्पूरक । पु । कर्पूरे ॥ कर्चूरके । कर्चूरके ॥

कर्पूरतिलका । स्त्री । जमाया सखी भेदे । जयायाम् ॥

कर्पूरतैलम् । न । कर्पूरस्नेहे । श्वेततैले ॥

कर्पूरनालिका । स्त्री । कपूरनारीति ख्याते पक्वान्नविशेषे ॥ यथा । घृताक्तया समितया कृत्वा लम्बपुटंततः । लवङ्गोषणकर्पूरयुतया सितयान्वितम् ॥ पचेद्दाज्येन सिद्धेयं सेया कर्पूरनालिका । संयावसदृशीज्ञेया गुणैः कर्पूरनालिका ॥

कर्पूरमणि. । पुं । पाषाणप्रभेदे । कर्पूराश्मनि ॥ कर्पूरमणिनामायं गुरुया वातादिदोषनुत ॥

कर्पूररस । पु । रसकर्पूरे ॥

कर्पूरहरिद्रा । स्त्री । कपूरहलदीति ख्यातायाम् । सर्वकण्डूविनाशिन्याम् ॥

कर्पूराश्मा । पुं । उपरत्नविशेषे । कपूरचीनियेति ख्याते ॥

कर्फर' । पुं । दर्पणे ॥ इतिजटाधरः॥

कर्बर' । पुं । व्याघ्रे ॥ रक्षसि ॥ कृष्याति । ड्वर्णचिं° ।ड्वाभृगुड्डकुभ्यः पातिभ्यः च्वरच् ॥

कर्व्वरी । स्त्री । शिवायाम् ॥ पिशाच्याम् कोष ॥

कर्व्वुदार । पुं । कोविदारे ॥ नीलझिण्टाम् ॥ श्वेतकाञ्चने ॥

कर्बुदारक. । पु । श्लेष्मातकवृक्षे ॥

कर्बुर । पु । पापे ॥ राक्षसे ॥ नानावर्णे । चित्रे । किर्मीरे ॥ नर्द्दामिधान्ये ॥ न । जले ॥ काञ्चने ॥ धुस्तूर वृक्षे ॥ त्रि । चित्रवर्णवति ॥ कर्बति । कर्बचिं° । कर्बच्युनेन वा । कर्बगतौ वा । खोष्ठोपध. । मद्गुराद्यश्चेति उरच ॥ कर्बुरावर्बेन वा । बवयोरभेदादन्तस्थ मध्योपि॥

कर्बुरफल । पुं । साकुरुण्डवृक्षे ॥

कर्बुरा । स्त्री । कृष्णवृन्तायाम् । पारुल इति गौड भाषाप्रसिद्धे वृक्षे ॥ बर्बरायाम् । बाबुइतुलसी इति गौड भाषा ॥ उरजम्बा इम ॥

कर्बुरी । स्त्री । दुर्गायाम् ॥ इतित्रिकाण्डशेष ॥

कर्बूर. । पुं । शट्याम् ॥ द्राविडके । कचोरकाङी इतिभाषा ॥ राक्षसे ॥ न । स्वर्णे ॥ हरिताले ॥ त्रि । चित्रिते ॥ कर्बति । कर्बगतौ । खर्जादिभ्याइरः ॥

कर्बूरकः । पुं । कचूरामे ॥ स्वार्थेकः ॥

कर्म्मकरः । पुं । कीनाशे । यमे ॥ त्रि ।

भृत्ये ॥ वेतनाजीविनि । भरण्यभुजि । मूल्येन कर्मकुर्वति । कमेरा इति भाषा ॥ कर्म करोति । कृञ्० । कर्मणिभृताविति टः ॥

कर्म्मकरी । स्त्री । मूर्वालतायाम् ॥ बिम्बिकालतायाम् ॥ मूल्येन कर्मकुर्वन्त्याम् । दास्याम् ॥ टित्वान्ङीप्॥

कर्म्मकर्त्ता । पु । कर्मात्मककर्त्तरि ॥ यथा । क्रियमाणन्तुयत् कर्म स्वयमेव प्रसिध्यति । सुकरैः स्वैर्गुणैः कर्त्तुं कर्मकर्त्तेति तद्विदुरिति॥ त्रि । कर्मणः कर्त्तरि ॥

कर्म्मकाण्ड । पु । यावज्जीवमग्निहोत्रं जुहुयादित्यादिरूपेण चित्तशोधके कर्मप्रतिपादके वेदभागे ॥ संसारफलके ज्योतिष्टोमादिकर्मकाण्डे ॥ कर्मणांसमूहः । दूर्वादिभ्यः काण्ड' ॥

कर्म्मकार. । पुं । वर्णसङ्करजातिविशेषे । लौहकारे । लुहार इतिभाषा ॥ गोपाल्लात्तन्त्रवाय्यां वै कर्मकारोद्भभूत् सुत. । ब्रह्मवैवर्त्तेतु शूद्रायां विश्वकर्मणोजातइत्युक्तम् ॥ वृषे ॥ त्रि । भृतिंविना भारवहनादिकर्म्मकारके । बेगारी इतिभाषा ॥ कर्म करोति । कर्मण्यण् ॥

कर्म्मकीलक: । पु । रजके ॥ इतित्रिका

ण्डशेष ॥

कर्म्मक्षम । पुं । अलङ्कर्मीणे । कर्मकरणसमर्थे ॥ कर्मसु क्षम । सप्तमीतियोगविभागात् समास ॥

कर्म्मक्षेत्रम् । न । भारतवर्षे ॥

कर्म्मचोदना । स्त्री । कर्मविषयायां प्रेरणायाम् ॥ कर्म क्रिया पुरुषव्यापाररूपा ऽ र्थभावना तद्विषयाचोदना प्रेरणा विधिरूपा शाब्दीभावनेत्यर्थ ॥

कर्म्मज. । पु । कलियुगे ॥ स्वर्गादौ ॥ अदृष्टे ॥ वटद्रुमे ॥ त्रि । कर्मसम्भवे । कायिकवाचिकमानसकर्मोद्भवे ॥ कर्मणोजात. । जनी० । पञ्चम्यामजाताविति ड. ॥

कर्म्मजगुण. । पु । क्रियाजन्यगुण ॥ स च संयोग. । विभाग. । वेगः । इति भाषापरिच्छेद. ॥

कर्म्मठ । त्रि । कर्मशूरे । प्रयत्नेन मारब्धं कर्मसमापयति य. सतयोच्यते॥ कर्मकुशले ॥ कर्मणि घठते । कर्मणिघटोऽठच् ॥

कर्म्मण्य. । त्रि । कर्मयोग्ये ॥ कर्मणि प्रवीणे ॥ कर्मणि साधु. । तत्रसाधुरितियत् ॥

कर्म्मण्यभुक् । त्रि । भरण्यभुजि । कर्मकारे । वेतनोपजीविनि ॥ कर्मण्यं वेतनं भुङ्क्ते । भुज० । क्विप्॥

कर्मण्या । स्त्री । वेतने । मूल्ये ॥ कर्म्मणा सम्पद्यते । कर्मवेशाद्यत् ॥ कर्मणि साधुर्वा । तत्रसाधुरितियत् ॥

कर्म्मदेव । पु । यज्ञेन स्वर्गं प्राप्ते ॥ यथा । ज्योतिष्टोमादिना स्वर्गम्प्राप्ता स्तु कर्मदेवता इति॥ अदित्याहु । अस्मिन् कल्पेऽश्वमेधादिकर्म कृत्वा महत् पदम् । अवाप्याजानदेवैर्या पूज्यास्ता.कर्मदेवता इति ॥

कर्म्मधारय । पुं । समानाधिकरणे तत् पुरुषे ॥

कर्म्म । न । क्रियायाम् । देहेन्द्रियादिव्यापारे ॥ संयोगवियोगयोरसमवायिकारणजातीयकर्मेति कथिता क्रिया । उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चकर्म्माणि भवन्ति । नित्यनैमित्तिककाम्यप्रायश्चित्तप्रतिषिद्धभेदात्तदपिपञ्चविधं भवति । तच्चत्वारिधर्म्याणि अन्त्यमधर्म्यमितिनिश्चयः ॥ निष्फलं कर्म च कुर्यात् सन्दिग्धफलमेव च । न कर्म कुर्यान्मतिमान् सदा वैरानुबन्धि च ॥ सञ्चितक्रियमाणप्रारब्धभेदात् कर्मत्रिविधं भवति ॥ कायिकवाचिकमानसिकभेदात् पुनस्तत् त्रिविधं भवति ॥ विधिप्रतिषेधलक्षणं शास्त्रप्रसिद्धं कर्म । तत्र नित्यनैमित्तिकप्रायश्चित्तभेदात् त्रिविधम्भवति ॥ यागदानहोमात्मके वेदविहिते ॥ भूतभावोद्भवकरो विसर्गः कर्मसंज्ञित । भूतानां भवनधर्म्मिणां सर्वेषां स्थावरजङ्गमानां भावमुत्पत्तिम् उद्भवं वृद्धिं च करोति यो विसर्गस्त्यागः स च शास्त्रविहितो यागदानहोमात्मकः स एव कर्म संज्ञित ॥ सात्त्विकादिभेदात् पुनस्तत्त्रिविधम् । तत्र सात्त्विकं यथा । नियतं सङ्गरहितमरागद्वेषतः कृतम् । अफलप्रेप्सुना कर्म यत तत सात्त्विकमुच्यते ॥ राजसं यथा । यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः । क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ तामसं यथा । अनुबन्धं क्षयं हिंसा मनपेक्ष्य च पौरुषम् । मोहादारभ्यते कर्म यत तत् तामसमुच्यते ॥ तत्तद्वर्णाश्रमाभिमानविशिष्टेऽपि कारणीभूते । शास्त्रविहितक्रियाकलापे नित्यनैमित्तिककाम्यात्मके ॥ शुक्लं कृष्णं शुक्लकृष्णमेतित्रिविधभेदभिन्ने ॥ तत्त्रिविधं जनयत्फलति । तदाहु र्विश्वक्पाचार्याः । शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं गतिम् । उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवश ।

इति ॥ क्रियतेतत्तत्फलार्थिभिरिति कर्म्म । तस्यचानादित्वम् आद्यकोटे रनुपलभ्यमानत्वात् । यत शरीरवत कर्म्मकारणम् तच्चशरीर कर्म्मारब्धम् । तान्यपिशरीरान्तरेण कृतानि । तच्चकर्म्मजमिति सोयं तृतीय पाश. ॥ जन्मनिमित्ते अदृष्ट विशेषे ॥ उक्तमन्नवार्त्ति काकारै. । नकर्म्मकारणं मुक्ते र्नोमिस्तापसभेयजम् । कर्म्मभ्योजन्म नियतं जन्म येभ्निर्दैति' कृत । इति ॥ वासना कर्म्म विद्याच त्रयं जन्मप्रयोजकम् । उक्तं तच प्रधानत्त्व कर्म्मणा, श्रूयते पुन. ॥ उत्तमाधमदेहाख्यं वैषम्यं कर्म्मणा भवेत । देहे विद्यावासना भ्यां भवेद्भोगस्य कैाशलम् ॥ कर्म्म साध्वेव कर्त्तव्यमिच्छताभ्युदयञ्चिरम् । पापन्तु सर्वदाहेयं दुःखेभ्यस्तु सताभृशम् ॥ पूर्वकाण्डपरा इत्यं कर्म्मप्राधान्यमूचिरे । अथवेदान्त शास्त्रज्ञाः प्राहुः कामप्रधानताम् ॥ पुमानादैा काममय एवभूत्वाथ कर्म्म कृत । यतोयं कर्म्मणोहेतुः कामो तोस्य प्रधानता ॥ अकामस्य क्रिया काचिद्दृश्यते नेहकस्य चित् । यद्य द्धि कुरुते जन्तु स्तत्तत्कामस्यचेष्टितम् ॥ यत्रादिरूपं निष्यं कर्मद्विधा

। सस्कारक विविदि पाजनन ञ्च । त च विहितत्त्वमात्रबज्ञा क्रियमाण सस्कारकम् । ईश्वरार्पणबुद्ध्या क्रियमाण विविदिषा जनकम् । यत्क रोषीत्यादि भगवद्वचना दितिविवेक. ॥ षटकारकान्तर्गतकारकविशेषे ॥ अनद्वितीया विभक्तिर्भवति । उक्ते कर्म्मणि प्रथमाभवति । धातूपात्तव्यापारजन्यफलाश्रय कर्म्मेतित्तल्लक्षणम् । यत क्रियते फलार्थिभि स्तत कर्म्मेति प्रसिद्धम् । करोतेर्निखिलक्रियावाचकत्वात कर्त्तु र्व्यापारैर्यत् साध्यते तदित्यर्थ । अतएव क्रियाख्याप्यं कर्म्मेति क्रमदीश्वर । तच्चतुर्विधम् । निर्वर्त्त्यम् १ यथा घटं करोति पुत्रं प्रसूते ॥ विकार्य्यम् २ तच्चद्विविधम् । प्रकृतेरुच्छेदकम् प्रकृतेर्गुणान्तराधायकञ्च । आद्यंयथा काष्ठं भस्म करोति । अन्त्य यथा । सुवर्णं कुण्डलं करोति । तथाचोक्तमर्तृहरिणा । यदसज्जायते पूर्व जन्मना यत् प्रकाशते । तन्निर्वर्त्त्य विकार्य्यञ्चकर्म्मद्वेधा व्यवस्थितम् ॥ प्रकृत्युच्छेदसम्भूतं विकार्य्यं काष्ठभस्मवत् । अन्यद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥ प्राप्यम् ३ यथा ग्रामङ्गच्छति चन्द्रम् पश्यती

त्यादि ॥ अनीप्सितञ्च ४ यथा पा
पं त्यजती त्यादि ॥ त्यक्ताद्गमभ
वने ॥ ज्ञानसाधनविशेषे ॥ यथाहु
। कषायपक्तैःकर्माणि ज्ञानन्तपरमा
गति कषाये कर्मभि पक्वे ततो ज्ञा
नम्प्रवर्त्तते इति ॥ क्रियते फलार्थि
भि । डुकृञ् । कृञः भावे कर्म
णि च सर्वधातुभ्योमनिन् इतिमनि
न ॥ अर्द्धर्चादि ॥ आरभेतैव कर्मा
णि श्रान्तः श्रान्तः पुनः पुनः । कर्मा
ण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥

कर्म्मन्दी । पु । भिक्षौ । परिव्राजि ॥
कर्मन्देन प्रोक्तम् भिक्षुसूत्र मधीते
। कर्मन्दकृशाश्वादिनि ॥

कर्म्मफलम् । न । कर्मरङ्गफले ॥ कर्म
विपाके ॥ संसारे ॥ सर्वकर्म्मणाम्
फलं व्याकृतंसंसार एवेति भाष्यो
क्ते ॥ कर्मणः फलम् ।

कर्म्मफलप्रेप्सु । त्रि । कर्मफलार्थिनि ॥

कर्म्मफलासक्त । त्रि । कर्मणि फलेच
आसक्तः कर्तृत्वाभिमानो भोगाभि
लाषश्च यस्य तस्मिन ॥

कर्म्मभूः । स्त्री । आर्य्यावर्त्ते ॥ कृष्टभूमौ
। कर्म्मोक्ते ॥

कर्म्मभूमि । स्त्री । आर्य्यावर्त्त । पु
ण्यभूमौ ॥ अत्रकालिकयायुक्ता दू
रेऽत्र इति निर्भयाः । सर्वभक्ष्या नम



र्य्यन्त कर्मभूमिमचेतस ॥ कर्मणो
भूमि ॥ भारतवर्षे ॥ यथा । तत्रापि
भारतं श्रेष्ठं जम्बुद्वीपे महामुने । य
तोहि कर्मभूरेषा अतोऽन्या भोगभूम
य इति विष्णुपुराणम् ॥

कर्म्ममीमांसा । स्त्री । पूर्वमीमांसाया
म् । कर्मकाण्डवेदविचारग्रन्थे जैमि
निप्रणीते ॥

कर्म्ममूलम् । न । कुशे । दर्भे ॥ कर्म
णो हेतौ ॥ कर्मणो मूलम् ॥

कर्म्मयुगम् । न । कालियुगे ॥ इतित्रि
काण्डशेषः ॥

कर्म्मयोगः । पु । ईश्वरार्पणबुद्ध्या क्रिय-
माणे फलाभिसन्धिरहिते तत्तद्वर्णा
श्रमोचिते वेदविहिते कर्मकलापे
मन्त्वाना ज्ञानसाधन भूते ॥ चित्त-
शुद्धिजनके वैदिके कर्मणि ॥

कर्म्मरङ्गः । पुं । न । कमरख इति प्रसि
द्धे फलवृक्षे । पीतफले । कर्मारे ।
न्युके ॥ कर्मरङ्गं हिमं ग्राहिस्वाद्वम्लं
कफ वातकृत ॥

कर्म्मारी । स्त्री । वंशरोचनायाम् ॥

कर्म्मवज्रः । पुं । शूद्रे ॥ इतिमहाभा
रतम् ॥

कर्म्मवाटी । स्त्री । तिथौ ॥

कर्म्मविपाकः । पुं । कर्मजन्यफलस्य परि
पाके ॥ शातातपभृगुभरतोक्ते पाप

रोगप्रायश्चित्ताख्ये विवरणग्रन्थे ॥

कर्म्मव्यतिहार । पु । क्रियाविनिमये ॥ परस्परकरणे ॥

कर्म्मशील । त्रि । कार्म्मे । कर्मकृति ॥ कर्मशीलमस्य ॥

कर्म्मशूर । त्रि । कर्मठे । प्रयत्नेन प्रारब्धकर्मपरिसमापके ॥ फलपर्यन्तकर्मकर्त्तरि ॥ कर्मणिशूर । सप्तमीसमासः ॥

कर्म्मशेष । त्रि । उत्पादविकार्याप्यसंस्कार्येषु पुरोडाशसोममन्त्रव्रीह्यादिषु ॥

कर्म्मसङ्ग । पु । कर्मसुदृष्टादृष्टार्थेषु अहमिदङ्करोमि एतत् फलम्भोक्ष्ये इत्यभिनिवेशविशेषे ॥

कर्म्मसङ्गी । त्रि । श्रुतिस्मृतिविहितप्रतिषिद्धकर्मफलाधिकारिणि । कर्त्तृत्वाभिमानेन फलाभिसन्धिना च कर्मण्यभिनिविष्टे ॥

कर्म्मसङ्ग्रह । पु । कर्मसङ्गृह्यते समवैत्यचेति व्युत्पत्त्या कर्माश्रये ॥ कर्म्म ग्र पुण्यापापरूपस्य अर्थभावनाया. सङ्ग्रहे सङ्क्षेपे ॥

कर्म्मसचिवः । पु । कर्मोपयुक्तसचिवे । धीसचिवातिरिक्ते मन्त्रिविशेषे ॥ कर्मणि सचिव सहाय ॥

कर्म्मसन्न्यासिक । पु । यतौ । सन्न्यासिनि ॥

कर्म्मसन्न्यासी । पु । यतौ ॥ द्विविध कर्मसन्न्यास. फलसाधनभेदत । फलाय ज्ञानिनस्त्यागो जिज्ञासोर्ज्ञानसिद्धये ॥ फलवत् कर्मणोपित्याज्यत्वे कर्मण्येवाधिकारस्ते इत्यादिस्मृतिविरोध इत्याशङ्क्य तस्याविरक्तविषयत्वानमैवमित्याह । अविशुद्धधिय कर्मण्यधिकारो विशुद्धधी । सत्त्वां विविदिषोत्पत्तौ तदर्थं कर्म सन्त्यजेत ॥ तदर्थंशुद्ध्यर्थम् ॥ कर्मणा सन्न्यास कर्मसन्न्यास । सोऽस्यास्ति । इनि ॥ कर्मणा वध्यतेजन्तुर्विद्ययाचविमुच्यते । तस्मात् कर्म न कुर्वन्ति यतय पारदर्शिन ॥

कर्म्मसाक्षी । पु । सूर्ये ॥ सूर्यादिनवसु ॥ सूर्य सोमो यम कालो महाभूतानि पञ्चच । एते शुभाशुभस्येह कर्मणो नव साक्षिण ॥ कर्म णा. साक्षी ॥

कर्म्मसिद्धि । स्त्री । इष्टानिष्टलक्षणायां फलप्राप्तौ ॥

कर्म्माध्यक्ष । त्रि । क्रियासाक्षिणि ॥

कर्म्मान्त । पु । कर्मभुवि । कृष्टभूमौ ॥ इक्षुधान्यादिसङ्ग्रहस्थाने ॥ शुचीनाकरकर्मान्ते इत्युक्ते ॥ कर्मावसाने ॥ कर्मान्ते दासभृत्याश्चेत्यु

ते ॥

कर्मार । पु । कर्मकारे । लौहकारे । लुहार इतिप्रसिद्धे जातिविशेषे ॥ वंशे । त्वचिसारे । बाँस इतिप्रसिद्धे वृक्षे ॥ कर्मरङ्गे । कमरख इतिभाषा ॥

कर्मार्ह । पु । पुरुषे ॥ त्रि । क्रियायोग्ये ॥

कर्माशौच. । पु । अनहङ्कारे ॥

कर्मी । पु । दक्षिणासहितज्योतिष्टोमादिकर्मानुष्ठायिनि । यजमाने । देवानामन्ने ॥ केवलकर्मभिः चन्द्रमण्डलाधिकारी परतन्त्रो देवानामन्नभूत इति श्रौतीप्रसिद्धिः ॥ त्रि । कर्मविशिष्टे ॥ कर्मास्ति अस्य । ब्री० इनि. ॥

कर्मिष्ठ । त्रि । क्रियावति ॥

कर्मीरक । पुं । अक्षोटे ॥

कर्मेन्द्रियम् । न । कर्मसाधकेइन्द्रिये । पाय्वादिपञ्चके व्यस्ते समस्ते च ॥ पायूपस्थम् पाणिपादौ वाक्चैवेन्द्रियसङ्ग्रहः । उत्सर्गानन्दनादानगत्यालापास्तु सत्क्रियाः ॥ वागादीनीन्द्रियाण्याकाशादीनां रजोंशेभ्यो व्यस्तेभ्य. पृथक्पृथक् क्रमेणोत्पन्नानि भवन्ति । यथोक्तं भागवते । तेषां रजोंशैर्जातानि क्रमात् कर्मेन्द्रियाणि च । पञ्चकमिति ॥ कर्मसाधकमिन्द्रियङ्कर्मेन्द्रियम् ॥ कर्मेन्द्रियदेवता अग्नीन्द्रोपेन्द्रयमप्रजापतय । कर्मेन्द्रियाणां वागादीनां क्रमेणाग्न्यादयो देवता भवन्ति ॥ कर्मेन्द्रियाणां विषयास्तु वचनादानगमनविसर्गानन्दाः क्रमेण वागादीनां विषयाः ॥

कर्व. । पु । कामदेवे ॥ भ्वा० ॥ कर्वति । कर्व हिंसायाम् । किरतिवा । कृविक्षेपे । कृगृशृदृभ्यो वः ॥

कर्वट. । पु । न । शतग्राममध्ये मनोरमस्थाने ॥ ग्रामशतस्य जना. क्रयविक्रयादिना सेवादिना वा येनग्रामेण जीवन्ति तस्मिन् ॥ इति केचित् ॥ चतु समग्रामे ॥ चतु. सभेट स्थाने ॥ चतु शतग्रामसङ्कटस्थाने ॥ न । नगरे । पुरे ॥

कर्वुर. । पुं । राक्षसे ॥ पापे ॥ भेषजविशेषे ॥ व्याघ्रे ॥ कृणाति । कृञ्० । कृगृदृवनिभ्य करच् ॥

कर्वुरी । पु । उमायाम् । शिवायाम् ॥ शिवपत्न्याम् ॥

कर्व्य । पु । कर्चूरे । कचूर इतिभाषा ॥ इति राजनिघण्टुः ॥

कर्ष. । पुं । न । अक्षे । माषादौ उन्माने । अशीतिरक्तिकासु ॥ भिषजां व्यवहारेतु कर्ष. स्यात् तोलकद्वयम् । सुवर्णे । विञ्जापदके ॥ राज

ख्लसर्पिर्भ्यां मरिचैलादिवासितान् ॥ * ॥ भर्जितान्लकुष्माण्डम् । कुष्माण्डखण्डानि ससैन्धवानि तनूनि सम्मर्दितपिण्डलानि । जम्बीरनीराश्रितशृङ्गवेरै भवन्ति यक्षे रपितो मणाय ॥ * ॥ क्षोभिका । कुष्माण्डसम्भवा खण्डा सुस्विन्ना म्वणकान्विता । वेशवारयुतेतैले तलये द्वाप्रलेपयेत् ॥ * ॥ राजिकाकूरी । खण्डं कनिष्ठिकाकारं कौष्माण्डं स्वेदपिण्डितम् । राजिकादधिसिक्तुत्ये मिश्रित काल्लुरीयकम् ॥ एव बहुविधा कार्या कौष्माण्डाश्विविच यथाः । प्रलेपतलनस्वादुचारसन्धानराजिकाः ॥ इवत् पित्तलत्वात् उष्मा अण्डेषु वीजेषु यस्य । पृ° ॥ शिवस्यगणदेवताविशेषे ॥ भृणविशेषे ॥

कुष्माण्डक । पु । कुष्माण्डे ॥

कुष्माण्डी । स्त्री । उमायाम् । अम्बिकायाम् ॥ ओषधौ ॥ कर्कारौ ॥ यागक्रियाविशेषे ॥

कुसित । पु । जनपदे ॥ कुसति । कुससंश्लेषणे । कुसेरुमोमेदेता इति इत प्रत्यय ॥

कुसितायी । स्त्री । } कुसिदाय्याम् ।
कुसिदायी । स्त्री । } वृद्धिजीविपत्न्याम् ॥ कुसितस्य कुसिदस्य वा स्त्री पुंयोगे इत्यादि कुसितकुसिदानामुदात्तइति प्रकृतेरैकारादेशो ङीप्च प्रत्ययः ॥

कुसिम्बी । स्त्री । शिम्ब्याम् ॥

कुसीदम् । न । अर्थप्रयोगे । वृद्धिजीविकायाम् । वृद्ध्याजीवने । सूदकी जीविका इति भाषा ॥ पुनर्देयत्वेन स्वीकृत्य गृहीते धनविशेषे ॥ ॥ यथा । स्थानलाभनिमित्तं यद्दानग्रहणं मिष्यते । तत् कुसीदमिति प्रोक्तं तेनवृद्धि कुसीदिनाम् ॥ इतिनारद । अस्यार्थ । स्थानं मूलधनावस्थानम् । लाभोवृद्धि । दानग्रहणपदे कर्मणिल्युटा साध्ये तेन मूलधनाऽवस्थानेसत्येव योलाभ स्तदर्थंयद्दानं धनिकेन दीयमानं मूलधनम् अधमर्णेनच ग्रहणं तथास्वीकृत्यगृह्यमाणं यत् तद्धनमिति ॥ कलामूल्ये तु अवश्यापाकरणीयत्वरूपगुणयोगाद् गौण प्रयोग । अतएव वाणिज्यार्थमयुक्तस्य मभृणत्वम् इति मिश्रा ॥ अपिच । कुतसितात् सीदतश्चैव निर्विशङ्कै प्रगृह्यते । चतुर्गुणं वाष्टगुणं कुसीदाख्य मत स्वत । इति वृहस्पति । अस्यार्थ । कुत्सितात् सीदतश्चाधमर्णात् सकलधन यत

गृह्यते निर्विघ्नकृे इत्समर्थो चतुर्गुण बेतिवाकारोऽनास्थायाम् तेनद्वैगु ण्यादिलाभ इति ॥ कुसीदे विशे षो गारुडे २१५ अध्याये उक्त यथा। कुसीदकृषिवाणिज्य प्रकुर्वीता स्वयंकृतम्। आपत्काले स्वयं कुर्वं न नैनसा युज्यते द्विज ॥ वक्ष्वेत्र चैनोपाया ऋषिभि परिकीर्त्तिता । सर्वेषा मपि चैवेषां कुसीद मधि कं विदु ॥ अनावृष्ट्याराजभयान् मूसिकाद्यैरुपद्रवे । कृष्यादिके भवे द्बाधा साकुसीदे न विद्यते ॥ शुक्ल पक्षे यथा कृष्णे रजन्यादिवसेपि वा। उष्णेवर्षेतिशीते वा वर्द्धनं न निवर्त्तते ॥ देशान्तरगतानां या वृद्धिर्ना नारण्योपजीविनाम्। कुसीदसर्वत सम्यक् संस्थितस्यैवजायते ॥ बाल्य साभ. पितॄन देवान् ब्राह्मणांश्चैव पूजयेत्। तेतुष्टास्तस्य तद्दोष शम यन्ति न संशय ॥ वणिक्कुसीदोद ग्रासुवर्णं ग काञ्चनादिकम् । कु सीदलो ऽन्नपानानि यानशय्यास नानिच ॥ पशुभ्योविंशतिंदत्त्वा प शुस्वर्णादिकंप्रसन् । पादेनायस्यपा रक्यंकुर्यात् सञ्चयं मात्मवान ॥ अ र्द्धेनचात्मभरणं नित्यनैमित्तिका न्वितम्। पादञ्च प्राप्यमानस्य मूल भूत विवर्द्धयेत ॥ विद्याशिल्पं भृति सेवा गोरक्ष्यंविपणि. कृषि. । वृत्ति र्भैक्ष्यं कुसीदञ्च दशजीवनहेतव इति ॥ त्रि। कुसीदिके ॥ कुस्यते । कुससंश्लेषणे । कुसेरुम्भोमेदेताद- तीद. । इत्युणादिसूत्रीयोऽयस्यादि दीर्घादिश्चतन्त्रगोपाल । इत्या कप्यमीतिहृष्ट्व ग्रन्थ एवेतिहलिका वृहरदत्तादिग्रन्थो पद्ममनिर्णीत म् ॥

कुसीदिक । त्रि। वार्द्धुषिके। वृद्ध्याजी वे॥ कुसीदं वृद्धिस्तदर्थं द्रव्य कुसीद म्। तत प्रयच्छति। कुसोदृदश- कादश्रात इन् इचावितिष्ठन् ॥ स्त्रि यां। पिष्कान् डीपि कुसीदिकी ॥ कुसुमम् । न । स्त्रीरजसि ॥ नेत्ररोग विशेषे ॥ फले ॥ पुष्पे ॥ मात्रामाचे पञ्चमासिकस्य। ऽ॥ षष्ठप्रभेदे ॥ कु स्यति कुस० । कुसेरुम्भोमेदेता इ त्युम. ॥ अत्रकुसुमशताध्यायो यथा। फलकुसुमसम्पद्वृद्धिं वनस्पि तीनां विलोक्य विज्ञेयम् । सुलभ त्व द्रव्याणां निष्पत्ति. सस्यानाम् ॥ केनकस्यवृद्धिर्भवतीत्याह । शाले न कलमशालीरक्ता शोकेनरक्तशा लिस्तु ॥ पाण्डूक. क्षीरिकया नीला शोकेनसूकरक. ॥ न्यग्रोधेनयव

क स्तिन्दुकवृक्षाच्चषष्टिको भवति । अश्वत्थेन च्चेया निष्पत्ति' सर्वशस्या नाम् ॥ जम्बूभिस्तिलमाषा' शिरी षवृक्षाच्चकङ्गु निष्पत्ति । गोधूमा श्चमधूकै यैववृद्धि' ससपर्णेन ॥ अ तिमुक्तककुन्दाभ्यां कर्पासं सर्षपान् वदे द्ऽसनै' । वदरीभिश्चकुलत्थाँ श्चिरविल्वेनादिशेन्मुद्गान् ॥ अतसी वेतसपुष्पै. पलाशकुसुमैश्चकोद्रवा श्चेया । तिलकेनशङ्खमौक्तिकरज तान्यऽथचेङ्गुदेन शरा ॥ करिणश्च हस्तिकर्णैराटेश्या वाजिनोश्वकर्णेन । गावश्चपाटलाभि कदलीभिरजा विकंभवन्ति ॥ चम्पककुसुमै कनक विद्रुमसम्पच्चवन्धुजीवेन । कुरुवक वृक्षावज्रवैदूर्यंनन्दिकावर्त्तैं ॥ वि- द्याच्च सिन्दुवारेण मौक्तिककाव्का. कुसुमेन । रक्तोत्पलेनराजा मन्त्री नीलोत्पलेनोक्त' ॥ श्रेष्ठीसुवर्णपुष्पा त् पद्मैर्विप्रा पुरोहिता कुमुदै । सौगन्धिकेनवलपतिरर्केण हिरण्य परिवृद्धि ॥ आम्रै क्षेम भल्लातकैर्भ यं पीलुभिस्तथारोग्यम् । खदिरश मीभ्यादुर्भिक्ष मर्जुनै. शोभनावृ ष्टि. ॥ पिचुमन्दनागकुसुमै सुभिक्ष मथमारुत कपित्थेन । निचुलेनावृ ष्टिभयं व्याधिभयं भवति कुटजकुसु



मेन ॥ दूर्वाकुशकुसुमाभ्यामिक्षु र्वह्निश्चकोविदारेण । श्यामालता भिर्वृद्धा वन्धक्यो वृद्धिमायान्ति ॥ अथैताभिर्वृष्टि लक्षणमाह । यस्मि नकाले स्निग्धनिच्छिद्रपत्रा संदृ श्यन्ते वृक्षगुल्मालताश्च । तस्मिन् वृष्टि शोभना सम्प्रदिष्टारूक्षच्छिद्रै रल्पमंभ प्रदिष्टम् ॥ इतिवाराह्या २७ अध्याय. ॥

कुसुमकार्मुकः । पु । कामदेवे ॥

कुसुमपुरम् । । पटना इति प्रसिद्धपुरे । पाटलिपुत्रे ॥

कुसुममध्यम् । न । चालितागाछइति गौडभाषा प्रसिद्धे वृक्षविशेषे । भ व्यहृचे ॥

कुसुमशरः । पु । कामदेवे ॥

कुसुमाकरः । पु । वसन्तर्त्तौ ॥

कुसुमाढ्य । त्रि । पुष्पयुक्ते ॥ नेत्रव- ति ॥

कुसुमागम. । पु । वसन्ते ॥

कुसुमाञ्जनम् । न । पुष्पाकाररी तिमलसम्भवेञ्जने । पौष्पके । री तिपुष्पे ॥

कुसुमाञ्जलि । पु । पुष्पाञ्जलौ ॥ उद यनाचार्यकृतेग्रन्थविशेषे ॥

कुसुमात्मकम् । न । कुङ्कुमे । घुसृ णे ॥

नक्षत्रचासमौनादौ ॥ सर्पविष वासिष्याश्चर्यास्मये ॥ कुहवि०चु० अदन्तः । ययासअस्योयुच ॥

कुहनिका । स्त्री । कुहनायाम् ॥

कुहरः । पु । नागविशेषे ॥ न । गह्वरे ॥ शुषिरे । छिद्रे ॥ कर्णे ॥ कण्ठे ॥ कण्ठशब्दे ॥ समीपे ॥ कुहरति । हरतेरनुद्यमनेऽच ॥ यद्वा । कुहवि स्मापने । इगुपधज्ञात्क: । कुहं रा ति । रा० । आतइतिक. ॥

कुहरितम् । न । पिकालापे ॥ रतध्वनौ ॥ रटिते ॥ चि । कृतच्छिद्रे ॥

कुहलिः । पु । पूगपुष्पिकायाम् । पान इतिभाषा ॥

कुहा । स्त्री । कुज्झटिकायाम् ॥ कटुक्याम् ॥

कुहुः । स्त्री । कुह्वाम् ॥ कुहयति । कुहविस्मापने । म०कुः ॥

कुहूः । स्त्री । नष्टेन्दुकलायाममायाम् । उदयेऽमायोगात्नष्टचन्द्रकलाऽमा कुहूपदवाच्या ॥ अङ्गिरादुहितरि ॥ कुहयति । कुहवि० ॥ कृतिगृध्योः कूरिति कूप्रत्ययो वा कुहकादित्वापि ॥

कुहूकण्ठः । पुं । } कोकिले । पिके ॥
कुहूमुखः । पु । } कोयल इतिभाषा ॥
कुहूरवः । पु । }

कुहूलम् । न । सशल्यावीरन्ध्रे ॥

कुहेडिका । स्त्री । } कुज्झटिकायाम् ॥
कुहेडी । स्त्री । }

कुहेलिका । स्त्री । कुज्झटिकायाम् । धूमिकायाम् । नभोरेणौ ॥

कुह्वान । पु । कुत्सितशब्दे ॥

कू । स्त्री । पिशाच्याम् ॥

कूकुदः । त्रि । सत्कृत्यालङ्कृतकन्याप्रदातरि ॥ सत्कृत्यालङ्कृताङ्कन्यां यो ददाति स कूकुदः ॥ कोकति । कुकआदाने । इगुपधेतिकः । पृ०॥ यद्वा । कवर्नं कू. । कूङ्शब्दे । तु० । सं० । कुब शब्दस्य कु. भू: कौर्त्ति भूमिरितियावत् । कूकुदद्दाति । आतोनुपेति सुपीति योगविभागा दा क. ॥

कूचः । पु । कुचे । स्तने ॥ कवते । कुङ० । कुवस्टद्दीर्घश्च ॥

कूचिका । स्त्री । } तूलिकायाम् । चित्रलेखनिकायाम् ॥ टित्वान्ङीप् ॥
कूची । स्त्री । }

कूजनम् । न । कुन्यने ॥

कूजितम् । न । रुते । पक्षिध्वनौ ॥

कूटः । पु । अगस्त्यमुनौ ॥ पु । स्त्री । गृहे ॥ पु । न । निश्चले ॥ राशौ । धान्यादिपुञ्जे ॥ अयोघने ॥ लोहमुद्गरे ॥ दम्भे ॥ मायायाम् । विपरीतदर्शने । यथार्थवस्त्वाच्छादनेना S

ऽयथार्थवस्तुप्रकाशने ॥ अद्रिशृङ्गे॥ तुच्छे ॥ सीरावयवे । फालाधारे ॥ यन्त्रे । मृगबन्धनविं° ॥ अनृत ॥ भग्नशृङ्गखण्डे ॥ पूर्द्वारि । कूटयते। कूटआप्रदाने । चुरादिः॥ कूटयति वा । कूटदाहे । भ्वा ॥ कूट्यतेवा । घञ ॥

कूटक । पु । गन्धकुव्याम् । सुरामाम गन्धद्रव्ये ॥ कवर्याम् । पर्वत विशेष ॥ न । फाले ॥ कूटयति । कूटच्छेदने । चुरादि । ण्वा° कन् ॥

कूटकारक । पु । साक्षिवादे मृषावादस्य कर्त्तरि ॥

कूटकार्षापण । पु । मिथ्याभूतरौप्यादि मुद्रायाम् । कृत्रिमरौप्यादौ ॥

कूटकृत् । पुं । शिवे ॥ कायस्थे ॥ त्रि । कितवे ॥

कूटज । पुं । कुटजवृक्षे ॥

कूटपालक । पु । पित्तज्वरे ॥ कुलालस्य पवने ॥

कूटपूरी । स्त्री । करायिकायाम् ॥

कूटपूर्व । पु । हस्तिनखदोषजेज्वरे ॥ मायिनि ॥

कूटबन्धम् । न । उन्माथे । आमिषन्यस्तामृग पक्षिबन्धनार्थंछलपातितयन्त्रे । फन्दापाँद् इतिआल इतिच भाषा ॥ कूटस्वरूपं यन्त्रम ।

कूटशाल्मलि । पु । शाल्मलि विशेषे । कृष्णशाल्मल्याम् । रोचने ॥ कूट शाल्मलिकल्लिका कटुका कफवातनुत् । भेदनी प्लीहजठरयकृद्गुल्मविषापहा ॥ भतानाश्च विबन्धास्रमेद शूलकफापहा ॥ कूटशाल्मलिस्तु ॥

कूटसङ्क्रान्ति । स्त्री । अर्द्धरात्रातीते सूर्यसंराश्यन्तरगमने ॥ यथा । अर्द्धरात्रेव्यतीतेतु यदासङ्क्रमतेरविः । सा ज्ञेया कूटसङ्क्रान्ति र्मुनिभिः परि कीर्त्तिता इति॥

कूटसाक्षी । त्रि । मिथ्यासाक्षिणि । साक्ष्ये मिथ्याभिधायिनि ॥

कूटस्थ । त्रि । कालमभिव्याप्यस्थिते । एकरूपतयाकालव्यापिनि । यथैकेनैव स्वभावेननिरवधिकालस्य व्यापके आकाशादौ ॥ अज्ञानतत्कार्याधिष्ठाने ॥ विषयसन्निधावपि विकार शून्ये ॥ अधिष्ठानतयादेहद्वयावच्छिन्नचेतन कूटवन्निर्विकारेणास्थित कूटस्थउच्यते ॥ न । प्रकृति । परिणामरहिते ॥ कूटोनिश्चलस्तिष्ठति । यद्वा । कूटमयोघनस्तद्वत्तिष्ठति । संसर्गिणामपिस्वयमनष्ट इत्यर्थ. ॥ ष्ठा० ॥ सुपिस्थ इति कः ॥ व्याघ्रनखाख्यगन्धद्रव्ये ॥

कूटागारम् । न । चन्द्रशालिकाया म् । वडभ्याम् ॥ रूपागारे ॥ स्त्री यां क्रीडागृहे ॥

कूटायुधम् । न । वहि: काष्ठादिमये ऽ न्तर्गुप्तनिशितशस्त्रे ॥ अधर्मप्रधान प्राणिभि कूतव्यवहाराणि तानिव द्गुप्रकाणि सन्ति ॥

कूटार्थभाषिता । स्त्री । प्रबन्धकल्पना- याम् । कथायाम् । रूपकथा इति गौडभाषा ॥ प्रहेलिकायाम् ॥

कूणि । त्रि । रोगादिनाकुञ्चितकरे । कुकरे ॥

कूणिका । स्त्री । शृङ्गे ॥ कलिकायाम् । वीणामुलस्थवशशलाकायाम् ॥

कूणित । त्रि । मुद्रिते । सङ्कुचिते ॥

कूदर. । पु । जातिविशेषे ॥ यथा ब्रा ह्मण्या क्षत्रियवीर्येण क्षतौ प्रथमवा सरे । कुत्सिते चोदरे जात कूदर स्तेनकीर्त्तित ॥ तद्गोत्रं विप्रतस्य पतितो ब्रूतदोषत. । सद्य कोटक ससर्गाद्धर्मो जगतीतले ॥ इति ब्र ह्मवैवर्त्तपुराणम् ॥

कूप. । पु । स्वनाम्नाख्याते जलाधारे । उदपाने ॥ अस्यलक्षणम् । यथा । भू मौ खातोऽल्पविस्तारो गम्भीरो म ण्डलाकृति । बद्धोऽबद्ध. स कूप स्या त् तद्भस. कौपमुच्यते ॥ गर्त्ते ॥ गु णवृक्षे ॥ मृन्माने ॥ कूपके । कुप्पा इ भाषा ॥ कुवन्तिमण्डूका अस्मिन् कु शब्दे । कुपुभ्याञ्चेतिपोदीर्घश्च ॥ कु त्सिता ईषद्वा आपोऽत्र । कुकुपृ रित्य । ऊदनोरित्यनदीर्घनिर्दे शादन्यत्राप्यूदितिवा ॥

कूपक । पु । गुणवृक्षे । नौमध्यस्थर ज्जुबन्धनकाष्ठे । गुणधरा मास्तूल इ तिभाषा ॥ कुप्पा इतिभाषा प्रसिद्धे तैलादिपात्रे ॥ कुकुन्दरे ॥ उदपाने ॥ नद्यादौ स्रोतोऽवधकारिणित रुशिलादौ ॥ विदारके । शुष्कनद्या दौ वार्यर्थं कृतगर्त्ते ॥ कुत्सित' कूप । कुत्सिते इतिक । कूपस्य प्रतिकृ तिरितिवा । इवे प्रतिकृताविति क न ॥ कूपे कायतिवा । कै० । सुपी ति क ॥

कूपखानक । पु । कूपस्य खननक र्त्तरि ॥

कूपत । अ । प्रश्ने ॥ प्रशसायाम् ॥

कूपाङ्क । पु । } रोमाञ्चे ॥
कूपाङ्ग । पु । }

कूपार. । पु । अकूपारे ॥

कूपिका । स्त्री । अम्भोगतोपले । जल मध्यस्थितपर्वतादौ ॥

कूपी । स्त्री । पात्रविशेषे ॥

कूमम् । न । सरोवरे ॥

कूर । पु । न । अन्ने । भक्ते ॥

कूर्च्च । पु । न । भ्रुवोर्मध्ये ॥ कत्थने ॥ श्मश्रुणि ॥ कैतवे । दम्भे ॥ मयूरपुच्छमुष्टौ । मुट्ठा इति भाषा ॥ कुशमुष्ट्याम् ॥ अङ्गुष्ठाङ्गुलिमध्यस्योपरिभागे ॥ पु । शीर्षे ॥ आसनविशेषे ॥ न । मलापकर्षणाद्यर्थ मुशीरादिनिर्मिते मुष्टिमाने ॥ तथाच नरसिंहपुराणम् । ततः समर्पयेत् कूर्चमुशीरादिविनिर्मितम् । मलापकर्षणाद्यर्थं श्रीमन्मूर्त्त्यङ्गसन्धितः इति ॥ विष्णुधर्मोत्तरेपि । उशीरकूर्चकं दत्त्वा सर्वपापैः प्रमुच्यते । दत्त्वा गोवालजं कूर्चं सर्वांस्तापान् व्यपोहति ॥ दत्त्वा चामरजं कूर्चं श्रियमाप्नोत्यनुत्तमा मिति हरिभक्तिविलासस्य ६ विलासे ४८ श्लोक ॥ कूरति । कुर्य्यते वा । कुर शब्दे । बा० चट् प्रत्ययः ॥

कूर्चशिरः । न । अङ्घ्रिस्कन्धे । गुडमुडा इति गौड भाषा ॥

कूर्चशीर्षः । पु । अष्टवर्गमध्यपठिते जीवकौषधौ । मधुरके ॥ नारिकेरे ॥ कूर्चं श्मश्रुतत्शीर्षमस्य ॥

कूर्चशीर्षकः । पुं । जीवके ॥ नारिकेरे ॥

कूर्चशेखरः । पुं । नारिकेरे ॥

कूर्चिका । स्त्री । कोरकविकृतौ । चीरसा इति गौडभाषा ॥ साद्विधा । यथा । दध्नासह च यत पक्वं चीरं सा दधिकूर्चिका । तक्रेण पक्वं यत चीरं सा भवेत्तक्रकूर्चिका ॥ सूचिकायाम् ॥ तूलिकायाम् । आलेख्यकूर्चिकायाम् । तुली इति गौडभाषा ॥ कुञ्चले ॥ कुञ्चिकायाम् । कपाटोद्घाटने ॥ द्रव्यमार्जनसाधने । तृणगुच्छे ॥ कूर्चति । कूर्चविकारं आदैराकृतिगणत्वादोध. । संज्ञायांण्वुल् ॥ कूर्च. श्मश्रुवादिरस्त्यस्याः । अतइनिठनाविति ठन् ॥

कूर्द्दनम् । न । क्रीडायाम् । खेलायाम् ॥ कुर्द्द क्रीडायाम् । ल्युट । वोरुपधायादीर्घ इक ॥

कूर्द्दनी । स्त्री । चैत्रावल्याम् । मधूत्सवे ॥

कूर्प्पम् । न । भ्रुवोर्मध्ये ॥ इति हेम० ॥

कूर्प्परः । पु । कुर्परे ॥

कूर्प्पासः । पु । अर्द्धचोलके ॥ कुर्परः कफोणिर्जानुवास्यते ऽच । कूर्परे आस्ते वा । अस्तुचेपणे आसउपवेशने वा । घञ । पृ० ॥

कूर्प्पासकः । पुं । चोले । स्त्रीणामाप्रपदीनकञ्चुके । स्त्रीणां कञ्चुलिकायाम् ॥ स्वार्थे कन् ॥

कूर्म्मः । पु । उन्मीलननिमीलनकरे शरीरस्थवायु विशेषे ॥ उन्मीलने स्मृतः कूर्मो भिन्नाञ्जनसमप्रभः इत्यु

त्ते ॥ कछुवा इति प्रसिद्धे जलजन्तु विशेषे । कच्छपे । पञ्चगुप्ते । कमठे ॥ अस्य लक्षणं यथा । स्फटिकरजतवर्णो नीलराजीविचित्र कलशसदृशमूर्त्तिं श्चारुवंशस्य कूर्म । अरुणसमवपुर्वा सर्षपाकारचित्र सकलनृपमहत्त्व मन्दिरस्य करोति ॥ अञ्जनभृङ्गश्यामतनुर्वा विन्दुविचित्रो ऽव्यङ्गशरीर । सर्पशिरो वा स्थूलगलो य सोपि नृपाणाराष्ट्रविवृद्ध्यै ॥ वैदूर्यत्विट् स्थूलकण्ठ स्त्रिकोणो गूढच्छिद्रश्चारुवंशश्च शस्त । क्रीडावाप्यां तोयपूर्णे मणौवा कार्ये कूर्मो मङ्गलार्थं नरेन्द्रैरिति ॥ वम. पृष्ठास्थि । मणि' कूपाधोभाग ॥ विष्णोरवतारवि० । सत्ययुगे समुद्रमन्थनकाले मन्दराचलधारणार्थे कच्छपरूपे भगवदवतारे ॥ यथा ॥ विलोक्य विघ्नेशविधि तदेश्वरो दुरन्तवीर्यो ऽवितथाभिसन्धि' । कृत्वा वपु काच्छपमद्भुतमन्तःप्रविश्य तोय गिरिमुज्जहार ॥ सुरासुरेन्द्रै र्भुजवीर्यवेपित परिभ्रमन्तं गिरिमङ्ग पृष्ठतः । विभ्रत्तदा वर्त्तनमादि कच्छपोमेने ऽङ्गकण्डूयनमप्रमेय इति ॥ कु कुत्सित ऊर्मि र्भुविवा ऊर्मिर्वेगो ऽस्य । अचाप्यन्यनवेत्य



त्राजितियोगविभागादच् समासान्त. ॥ मुद्राविशेषे ॥

कूर्मचक्रम् । न ॥ ज्योतिषप्रसिद्धे कूपिकर्मोक्ते कच्छपाकारचक्रे ॥ तस्याकारो यथा । प्राङ्मुखोभगवान देव कूर्मरूपी व्यवस्थित । आक्रम्य भारत वर्षं नवभेद यथाक्रमम् ॥ * ॥ तत्रनक्षत्रन्यासक्रम । मध्यप्राग ग्नियाम्यादिकृत्तिकादित्रयचयै । क्रूरवेधयुतैस्तैस्तु पीड्यन्ते तन्निवासिन. ॥ * ॥ तत्रवेधो यथा । पूर्वापरे भवेद्वेधो वेधश्चोत्तरदक्षिणे । ईशानैराक्षसेवेधो वेधश्चाग्नेयमारुते । ताराचयान्वित तत्र सौरिंबलेन चिन्तयेत् ॥ * ॥ तत्रवेधादिजन्यदोषा । अतिवृष्टिरनावृष्टि. शलभामूषिका खगा । स्वचक्रं परचक्रञ्च सप्तैते सम्भवन्तिच ॥ * ॥ एवं देशगृहग्रामक्षेत्रनामर्क्षतो वदेत । तथाच यन्त्रनक्षत्रेदि व्यपार्थिवनाभसा ॥ दृश्यन्तेसुमहोत्पाता' स्वादिशत्तत्रपीडयेत् । सौरिर्बलाधिकोदुष्ट स्वल्पवीर्य' शुभावह. ॥ एकदापीडयेच्च नभानुज कूर्मपञ्चके । तत्रस्थानेमहाविघ्नोजायते नात्रसशय ॥ दुष्टस्थाने गते चन्द्रेकर्त्तव्यशान्तिपौष्टिकम् ॥ * ॥ तत्क्रमध्यस्थादेशा. ।

मध्येसारस्वता मत्स्या शूरसेना
समाथुरा । पञ्चालसाल्वमाण्डव्य
कुरुक्षेत्रगजाह्वया ॥ मरुनैमिषवि
न्ध्याद्रिपाञ्चघोषा सयामुन । का
न्ययोध्याप्रयागश्चगया वैदेहकादय.
॥ * ॥ तत्रपूर्वस्यदेशा । प्राच्या मा
गधशोणौच वारेन्द्रा गौडराढका.
। वर्द्धमानतमोलिप्तप्राग्ज्योतिषोद
याद्रय. ॥ * ॥ तत्राग्निकोणस्थदेशा
। आग्नेय्या मङ्गवङ्गोपवङ्गत्रैपुरको
शला । कलिङ्गोड्रान्ध्रकिष्किन्ध्यावि
दर्भशबरादय ॥ * ॥ तत्रदक्षिणस्य
देशा. । दक्षिणे ऽवन्तिमाहेन्द्रमल
या ऋष्यमूकका । चित्रकूटमहार
ण्यकाञ्ची सिंहलकोङ्कणा ॥ कावे
रीताम्रपर्णीचलङ्कात्रिकूटकादय ॥
* ॥ तत्रनैर्ऋत कोणस्थदेशा । नै
र्ऋते द्रविडानर्त्तमहाराष्ट्राश्चरैव-
ता । यवन पह्लव सिन्धु पारसी
कादयोमता: ॥ * ॥ तत्रपश्चिमस्थ
देशा. । पश्चिमे हैहयाल्लादिम्लेच्छ
बाह्लीककादय ॥ * ॥ तत्रवायुकोण
स्थदेशा. । वायव्ये गुर्जराटश्चनाट
जालन्धरादय ॥ * ॥ तत्रोत्तरस्थदे
शा. । उत्तरे चीननेपालकुणकैके
यमन्द्रा । गान्धारहिमवत काम्ब
गन्धमादनमालवा: ॥ कैलासमद्र

काश्मीरम्लेच्छदेशा खसादय ॥ *
॥ तत्रैशानकोणस्थदेशा । ऐशाने
स्वर्ण भौमश्च गङ्गाद्वारश्चटङ्कण । वा
ह्लीकतक्षपुरककिरातादरदादय
॥ इति ज्योतिस्तत्त्वम् ॥ * ॥ जपय
ज्ञकर्मादौ कमठाकारचक्रे ॥ कूर्म्म
चक्रमविज्ञाय कुर्याज्जपयज्ञकम्
। तस्ययज्ञफलं नास्तिसर्वानर्थाय क
ल्पते ॥ इतितन्त्रशास्त्रम् ॥

कूर्म्मपुराणम् । न । कौर्म्मे । सप्तदश
सहस्रश्लोकात्मके महापुराणे ॥ य
था । सप्तदशसहस्रम्पुराणं कूर्म्म
भाषितमिति ॥

कूर्म्मपृष्ठ' । पु । अस्थानकूर्च ॥ कमठ
पृष्ठदेशे ॥ न । शरावे ॥

कूर्म्मपृष्ठकम् । न । शरावे । सकोरा
इति भाषा ॥

कूर्म्मराज । पु । कच्छपराजे । अकू
पारे । आदिकच्छपेविष्णोरवतारे ॥
यथा । पृथ्वि स्थिरा भव भुजङ्गम
धारयैनां त्वं कूर्मराज तदिदं द्वित
य दधीथा । दिक्कुञ्जरा. कुरुत त
त् त्रितये दिधीर्षां आर्य. करोतु
हरकार्मुक माततज्यमिति महान
टकम् ॥

कूलम् । न । रोधसि । तीरे । तटे ।
नद्याजलसमीपस्थाने ॥ स्तूपे सै

न्यपृष्ठे ॥ तडागे ॥ कूलयति । कूल आवरणे । पचाद्यच् ॥

कूलक । पु । कृमिशैले ॥ पु । न । स्तूपे ॥ तीरे ॥

कूलङ्कष । पु । समुद्रे ॥ कूलङ्कषति । कषहिंसायाम् । सर्वकूलाभ्रकरीषेषुकष. इतिखच् । अरुर्द्विषदिति मुमागम. ॥

कूलङ्कषा । स्त्री । नद्याम् ॥

कूलभू । स्त्री । तीरभूमौ ॥

कूलवती । स्त्री । नद्याम् ॥

कूलहण्डक । पु । जलावर्त्ते ॥ कूलभङ्गे ॥

कूलेचर । पु । लुलायादिपशुषु ॥ यथा । लुलायगण्डवाराहचमरीवारणादय । एते कूलेचरा प्रोक्ता यत कूलेचरन्त्यपाम् ॥ कूलेचरा मरुत्पित्तहरा वृष्या बलावहा । मधुरा शीतला स्निग्धा मूत्रला श्लेष्मवर्द्धनाइति ॥

कूबर । पु । कुब्जके । कूंजा इतिभाषाप्रसिद्धे मुष्णे ॥ पु । न । युगन्धरे । यत्ररथस्ययुगकाष्ठमासज्यते तत्र ॥ त्रि । रम्ये । चारौ ॥ कवते । कूङ् शब्दे । कुटादि । वा०वरच् ॥

कूवरी । पु । रथे ॥ कूवरोयुगन्धर सोस्यास्ति । इनि: ।

कूवरी । स्त्री । कम्बलाच्छादितरथे ॥ इतिहलायुध ॥

कूष्माण्ड । पु । कर्कारौ ॥ गणदेवताविशेषे ॥ दाक्षिमन्विरयाधिपतौ ॥

कूष्माण्डक' । पु । कुष्माण्डे ॥

कूष्माण्डवटिका । स्त्री । कुम्हडौरीइतिख्याते वटीविशेषे ॥ कूष्माण्डवटिका ज्ञेया पूर्वोक्तवटिकागुणा । विशेषात् पित्तरक्तघ्नी लघ्वी च कथिता बुधै ॥ पूर्वोक्तवटिका माषवटी ॥

कूष्माण्डी । स्त्री । अम्बिकायाम् ॥ ओषधौ ॥ कर्कार्वाम् ॥ कूष्माण्डी तु भृश लघ्वी कर्कारु रपिकीर्त्तिता ॥

कूहा । स्त्री । कुज्झटिकायाम् । कुहासा इतिभाषा ॥

कृक । पु । गले ॥ इति हेमचन्द्र. ॥

कृकण. । पु । कयार इति भाषाप्रसिद्धे क्रकरपक्षिणि ॥ कीटविशेषे ॥ कृ इति कणति । कणशब्दे अच् ॥ कृकेणाकणठेन अणति वा । अणशब्दे । अच् । ष०॥

कृकर । पुं । शिवे ॥ देहानिलविशेषे । क्षुत्करेव.यौ ॥ कृकरस्तु क्षुते चैव अथाकुसुमसन्निभ ॥ करवीरवृक्षे ॥ चक्षे ॥

कृकल. । पु । क्षुत्करे देहस्थे वायुविशेषे ॥

कृकला । स्त्री । पिप्पल्याम् ॥

कृकलास. । पु । सरटे । क्रकचपादि ।

प्रतिरूपे। हुताश्रये॥ कृकशिरोग्रीवा काण्ठञ्च वासयति। वसन्निवास्ये। अ०। कर्मण्यण्॥

कृकवाकु। पु। कुक्कुटे॥ मयूरे॥ सरटे॥ कृकेन गलेन वक्ति। वचपरिभाषणे। कृकेवचः कश्चेतिञुण्॥

कृकवाकुध्वजः। पु। कार्त्तिकेये। स्कन्दे॥ कृकवाकुर्ध्वजोऽस्य॥

कृकाटिका। स्त्री। घाटायाम्। ग्रीवायामुन्नतभागे॥ ग्रीवापश्चाद्भागे॥ कृकङ् काण्ठम् अटति। अटगतौ। इन्। स्वा० कन्॥

कृच्छ्रम्। न। आभीले। कष्टे। दुःखतत्कारणयोः॥ अंहसि। पापे॥ सान्तपनादिव्रते॥ मूत्रकृच्छ्ररोगे॥ त्रि। तद्वति॥ स्मृतौ व्रतेपुंस्त्यपि॥ कृन्तति मनेनवा। कृतीछेदने। कृतेश्छ्रकूचेतिरक् प्रत्ययः छश्चान्त्यस्यादेशः॥

कृच्छ्रसान्तपनम्। न। व्रतविशेषे॥ यथा गोमूत्र गोमय क्षीरं दधि सर्पि कुशोदकम्। एकरात्रोपवासश्च कृच्छ्रसान्तपनं स्मृतमिति॥ गोमूत्रादीन्येकीकृत्य एकस्मिन् दिने भक्षयेत् तद्दिनेनान्यत् किञ्चिदद्यात्। अपरदिने चोपवास इत्यर्थः॥ सम्यक् तपनञ्च। प्रज्ञाद्यण् यद्वा। सन्तप ति। ल्यु। तस्येदम् कर्म। अण्। कृच्छ्रञ्चतत्सान्तपनञ्च॥

कृच्छ्रातिकृच्छ्रः। पु। व्रतविशेषे॥ यथा सर्वाणि। अत्रभक्षस्तृतीय कृच्छ्रातिकृच्छ्रोयावत् सकृदादीत। यावदेकवारमुदकं हस्तेन ग्रहीतुं शक्नोति तावन्नवसु दिवसेषु भक्षयित्वा त्र्यहमुपवास कृच्छ्रातिकृच्छ्रः॥ सुमन्तुर्यथा। द्वादशरात्रनिराहार स कृच्छ्रातिकृच्छ्रः। एतत् कृच्छ्रातिकृच्छ्रद्वय द्वादशाहसाध्यमशक्तविषयम्॥ ब्रह्मपुराणम्। चरेत् कृच्छ्रातिकृच्छ्रञ्च पिबेत्तोयञ्च शीतलम्। एकविंशति रात्रन्तु कालेष्वेतेषु संयत॥ कालेषु प्रात सायमध्याह्नेष्वित्यर्थः। इति प्रायश्चित्तविवेक॥

कृच्छ्रारि। पु। विश्वामित्रऋषौ॥

कृच्छ्रार्द्धः। पु। दिनषट्कसाध्यव्रतविशेषे॥ यथापस्तम्ब। सायम्प्रातस्तथैवैकदिनद्वयमयाचितम्। दिनद्वयञ्चनाश्नीयात् कृच्छ्रार्द्धः सोभिधीयते॥ इति प्रायश्चित्तविवेकः॥

कृणुः। पु। चित्रकरजातौ। चितेरा इतिभाषा॥ इति त्रिकाण्डशेष॥

कृतम्। न। सत्ययुगे॥ यथा। दिव्यै र्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितमिति। मनुश्च। चत्वार्याहु सहस्राणि

वर्षाणान्तु कृत युगम् । तस्य तावच्छ ती सन्ध्यासन्ध्यांशस्तथाविध ॥ स न्ध्यासन्ध्यांशयो रन्तं यं कालोमुनि सत्तम । युगाख्य सतु विज्ञेय कृतत्रे तादिसंज्ञक इति ॥ पर्याप्ते । अलम र्थे ॥ फले ॥ त्रि । विहिते ॥ हिंसिते ॥ अकारि । डुकृञ्० । क्त ॥ निष्पा दिते ॥ पुं । कृताये ॥

कृतकम् । न । विड्लवणे ॥ त्रि । कृ त्रिमे ॥ कृन्तति । कृतीछेदने । वृ णात्तिवा । कृतीवेष्टने । वा० कुन् ॥

कृतकर्म्मा । त्रि । निपुणे । प्रवीणे । शि क्षिते ॥ पुण्यवति ॥ कृतङ्कर्म तत्त द्वर्णाश्रमाभिमाननिमित्त मन्त करण शोधक येन ॥

कृतकृत्य । त्रि । कृतार्थे । निष्पन्नक र्मणि । सम्पन्नकार्ये ॥ धन्ये ॥ विदुषि ॥ कृतं कृत्यवर्णाश्रमोचितमन्त कर णशोधक कर्त्तव्य येन नपुन' कृत्या न्तर यस्यास्ति स । कृतकृत्य स्तु सन्य स्य स्वात्ममात्ररति र्भवेत ॥ स्वयान याद्विमुक्तं ॥ ज्ञानामृतेन तृप्तस्य कृ तकृत्यस्य योगिन. । नैवाऽस्ति कि ञ्चित्कर्त्तव्यमस्तिचेन्नस तत्त्ववित् ॥ अकृत कृत्योहिमृत्योर्बिभेति । य थाहु. ॥ प्रायेणाकृतकृत्यत्वान् मृ त्योरुद्विजतेजन इति ॥

कृतकोकिल । पुं । काश्यपमुनौ ॥ उपव र्षमुनौ ॥ इतिचिकाण्डशेष ॥

कृतक्रिय । त्रि । कृतकार्ये ॥

कृतक्षण. । त्रि । लब्धावकाशे ॥

कृतघ्न: । त्रि । कृतघ्नतरि । कृतोपकार स्यापकारे प्रवर्त्तमाने ॥ कृतमुपका र मपकाराचरणेन यो विनाशयति सकृतघ्नइत्यर्थः । सचानेकविध प्रो क्त' पुराणे स्कन्दसंज्ञके । यथा ॥ भ- र्त्तृपिण्डापहर्त्ताच पितृपिण्डापहा- रक । यस्माद् गृहीत्वा विद्याञ्च द क्षिणां न प्रयच्छति ॥ पुमान् स्त्रियञ्च योवेत्ति यस्तान्घातयेन्नर. । कृतस्य दोषंवदति सकामान् नकरोतिय: ॥ नस्मरेत्तु कृत यस्तु, आत्मनान् य स्त, दूषयेत् । सर्वांस्तानृषिभि: सा र्द्धं कृतघ्नानब्रवीन्मनु रिति ॥ तस्य प्रायश्चित्तमपिनास्ति । यथा । ब्रह्मघ्ने चसुरापेच चौरेच गुरुतल्पगे । नि ष्कृतिर्विहिता सद्भिः कृतघ्ने नास्तिनि ष्कृतिरिति ॥

कृतच्छिद्रा । स्त्री । कोषातकीलता- याम् ॥

कृतज्ञ । पु । हरौ ॥ कृतं कार्यंजगद्रूप म् । जानातीतिज्ञ. आत्मा । कृतंचा सौज्ञश्चेतितथा । यद्वा । कृतजगत् क: आत्मायस्य । प्राणिनांपुण्यपाप

कृतवेध । पु । } श्वेतघोषा इति गौ
कृतवेधक । पु । } ड भाषा प्रसिद्धायां कोषातक्याम् ॥
कृतवेधना । स्त्री । राजकोषातक्याम् ॥
कृतश्रम. । त्रि । सङ्घोद्यमे । सङ्घोत्साहे ॥ श्रान्ते ॥ कृत. श्रमोयेन ॥
कृतसापत्निका । स्त्री । अधिविन्नायाम् । अध्यूढायाम् । अनेकभार्यस्य प्रथमोढायाम् ॥ सपत्न्याः भावः । ष्यञ् ङीषृश्चलोपाः । स्वार्थे कन् । ह्रस्व. । कृता सापत्निका यस्या ॥
कृतस्वर. । पु । आकरविशेषे । वल्मीकरे ॥
कृतहस्त' । त्रि । सुशिक्षितशरमोक्षे । कृतपुङ्खे ॥ कृतो ऽभ्यस्तोहस्तोयस्य ॥
कृताकृतम् । न । कार्यकारणयो ॥ कृतञ्च अकृतञ्च अनयो समाहार ॥ घटिताघटिते ॥ कृतञ्च तदकृतञ्च । तेनलञ् विशिष्टे नानञितिसमासः ॥ पु । परमेश्वरे ॥ कृत कार्यात्मकः अकृत' कारणात्मकः । कृत आत्मकृतश्च पूर्ववत् समास. ॥
कृतागम. । पु । विष्णौ ॥ कृत आगमः श्रुतिस्मृत्यादिलक्षणो येन सः ॥
कृताञ्जलि । पुं । लज्जालोषधौ ॥ त्रि । सम्पुटीकृतकर ॥ कृत-अञ्जलिर्येन ॥
कृतात्मा । त्रि । कृतकृत्ये ॥ शिक्षितान्त करणे ॥ योगिनि ॥
कृतात्यय. । पु । कर्मनाशे ॥ कृतस्य अत्यय ॥
कृतान्त । पु । यमे ॥ सिद्धान्ते ॥ दैवे ॥ अकुशलकर्मणि । अशेभकर्मणि ॥ कृतः अन्तोविनाशोयेन ॥ कृत अन्त' निश्चयोयेन यस्य वा । वेदान्तशास्त्रे ॥ कृतञ् कार्यां तस्यान्तःपरिसमाप्तिर्यस्मात्प्रलयात ॥ शनौ ॥
कृतान्तजनक. । पु । सूर्ये ॥ इति हेमचन्द्रः ॥
कृतान्ता । स्त्री । रेणुकानामगन्धद्रव्ये ॥
कृतान्नम् । न । लड्डुकादौ ॥ कृतञ्चतत् अन्नञ्च ॥
कृताय । पु । द्यूतक्रीडासाधनीभूताऽऽचपञ्चिहस्य चतुरङ्कभागे ॥
कृतार्थ. । त्रि । कृतप्रयोजने । कृतकार्ये ॥ कृत' अर्थ प्रयोजनं येन ॥
कृतार्थता । स्त्री । साफल्ये ॥ भद्रेकद ॥
कृताल्लय. । पुं । भेके । मण्डूके ॥ त्रि । कृतवासे ॥ कृत आलयोयेन ॥
कृतावक्रान. । त्रि । कृतकर्मणि ॥ कृत अवक्रान्तं कुकर्मयेन ॥
कृतावसथितक । त्रि । गृहादिकृत

पृष्ठमानुजक्रादिवन्ध्ये ॥

कृताक्ष । त्रि । प्रियिक्षिताक्षे ॥

कृति । स्त्री । करणे ॥ पुरुषप्रयत्ने ॥ हिंसायाम् ॥ विशत्यक्षरायावृत्तौ ॥ क्रियायाम् ॥ कृतिरिन्द्रियसंयम मित्यैकाग्रताकरणमिति छान्दोग्य भाष्यम् ॥ करणम् । डुकृञ्० । स्त्रियां क्तिन् । क्रियतेनया वा ॥

कृतकर' । पुं । रावणे । दशवदने ॥ इ तिशब्दमाला ॥

कृती । त्रि । पण्डिते । बुधे ॥ योग्ये । अभिज्ञे ॥ पुण्यवति ॥ साधौ ॥ कृ तार्थे ॥ कृतङ् कर्म प्रशस्तमस्याऽ स्ति । अतइनि. । कृतमनेन वा । इष्टादिभ्यादिनिः ॥

कृत्तः । त्रि । छिन्ने । वेष्टिते ॥ कृन्त्य तेस्म । कृतीछेदने क्तः ॥

कृत्ति' । स्त्री । कृष्णसारादिचर्मणि ॥ त्वचि ॥ भूर्जे ॥ कृत्तिकानक्षत्रे ॥ कृन्त्यते । कृती । स्त्रियां क्तिन् ॥

कृत्तिका । स्त्री । तृतीयनक्षत्रे । बहुला याम् ॥ तत्रजातस्य फलम् । क्षुधा धिकः सत्यधनै र्विहीनो ह्यटनो त्पन्नमति. कृतघ्न' । कठोरवाक् पा पिसकर्मकृत् स्यात् चेत् कृत्तिका यां मनुज प्रसूतइति ॥ कृन्तति । कृती० । कृतिभिदिलतिभ्य. किदि ति तिकन् ॥

कृत्तिकाभव । पु । चन्द्रमसि ॥ कृत्ति काया भवोऽस्य ॥

कृत्तिकासुत । पु । स्कन्दे ॥ स्कन्दे । का र्त्तिकेये ॥ कृत्तिकायाः सुत ॥

कृत्तिवासः । पु । शिवे ॥ इति द्विरू० ॥

कृत्तिवासा. । पु । शिवे ॥ कृत्तिश्चर्म वा सोऽस्य ॥

कृत्नु' । त्रि । कारौ । शिल्पिनि ॥ क र्त्तरि ॥ करोति कृणोति वा । डुकृ ञ् कृञ् हिंसायां वा । कृहनिभ्यां क्त्नु ॥

कृत्यम् । न । कर्त्तव्ये । कार्ये । प्रयो जने ॥ पुं । तव्यादिप्रत्ययेषु ॥ यथा । कृत्या. षट् ते समाख्याताः क्यपुण्य तौभावकर्मणो. । तव्यानीयावनण्यद् यत् केलिम. कर्मकर्त्तरि इति सुप· प्रसन्नताकारिका ॥ कर्त्तरि कर्मणि चार्थे विहिताः कृत्या वाच्यलिङ्गा भवन्ति ॥ त्रि । विहिते ॥ कार्ये ॥ क्रि यते । डुकृञ्० । विभाषाकृवृषोरि तिक्यप् ॥ कृत्यते वा । कृतीछेदने । ऋदुपधाच्चाक्लृपिचृतेरितिक्यप् ॥ धनादिभिर्भेदे भ्रंशे ॥ क्रुद्धलुब्धभी तावमानिताः परेकृत्या इति नी तिः ॥

कृत्यवित् । त्रि । कार्यज्ञे ॥ विधिज्ञे ॥

कृत्या । स्त्री । क्रियायाम् ॥ यथा । कां कृत्या मकार्षीः ॥ अभिचारदैवते ॥ यज्ञदेवताविशे० ॥ ॥ अभिचारक्रियायाम् ॥ करणम् । कृञ् शच्चेतिचात्क्यप् । तुक् । टाप् ॥ कृत्यते वा । कृती० ऋदुपधादितिक्यप् ॥

कृत्रिम । पु । सिल्हके । तुरुष्कनाम्नि गन्धद्रव्ये ॥ द्वादशपुत्रान्तर्गतपुत्रविशे० ॥ यथा । सदृशन्तु प्रकुर्याद्यं गुणदोषविचक्षणम् । पुत्रं पुत्रगुणैर्युक्तं सविज्ञेयश्चकृत्रिम इतिमनुः ॥ न । विड्लवणे ॥ काचलवणे ॥ जवादिनामगन्धद्रव्ये ॥ रसाञ्जने ॥ त्रि । कृतिसम्भवे । रचिते ॥ डुकृञ्० । भावे क्तित्रि । कृत्या क्रियया निर्वृत्तम् । त्रेर्मम्नित्यम् इति मप् ॥

कृत्रिमक. । पु । तुरुष्कनामनि गन्धद्रव्यविशेषे ॥

कृत्रिमधूप. । पु । } द्रवधूपे ।
कृत्रिमधूपक । पु । } नाना सुगन्धिद्रव्यकृतदशाङ्गादिधूपे ॥ कृत्रिमश्चासौधूपश्च ॥ स्वार्थे कन् ॥

कृत्रिमपुत्रक । पुं । कृत्रिमेपुत्रे ॥ त्रि । पुत्तलिकायाम् । गुडिया इति भाषा ॥

कृत्रिममित्र. । पु । रचितवन्धौ ॥

कृत्वा । अ । विधायेत्यर्थे ॥

कृत्सम् । न । उदके । जले ॥ सम्मुदाये ॥ पु । पापे ॥ कृन्तति कृणत्ति वा । कृतीछेदने वेष्टने वा । स्नुव्रश्चिकृत्यृषिभ्य किदितिस ॥

कृत्स्नम् । न । जले ॥ सर्वस्मिन् ॥ कुक्षौ ॥ त्रि । पूर्णे । समग्रे । सोपकरणे । सफले ॥ कृन्त्यते । कृती० । कृत्यधूभ्यांक्स्न ॥

कृत्स्नधर्म्म । पु । निष्कामकर्मानुष्ठाने ॥

कृत्स्नवित् । त्रि । परिपूर्णात्मविदि ॥

कृदर । पु । कुसूले । अन्नकोष्ठे । धान्यादिगृहे । गञ्ज गोला इतिचभाषा ॥ कुर्वन्ति तस्मिन् । डुकृञ्० । कृदरादयश्चेतिसाधु ॥ ॥

कृन्तत्रम् । न । लाङ्गले ॥ कृन्तति । कृती० । कृतेर्नुम्चेतिकत्रप्रत्यय ॥ कृन्तत्रण्कर्त्तनीयमिति वेदभाष्यम् ॥

कृन्तनम् । न । छेदने ॥ यथा । कृन्तनं नखकेशानां छेदनञ्च वनस्पतेः । श्रावाशौचे न कर्त्तव्यं पाठनं पठनं तथा ॥ इति नारद ॥

कृप । पु । द्रोणाचार्यस्य श्यालके । अश्वत्थाममातुले । कृपाचार्य्ये ॥ व्यासे ॥

कृपणः । पु । कृमौ ॥ त्रि । मन्दे । क्षुद्रे । किम्पचाने ॥ कुत्सिते ॥ महाव्यसनप्राप्ते । दीने ॥ यथा । महाव्यसनप्राप्तो दीनः कृपण उच्यते । कुलेप्यकृपणो राम सम्भूतः सर्वकामदे ॥ इति

रामाश्रयम् ॥ अत्यन्तदीने । फल कैतो । सकामे ॥ योऽस्यास्त्वाम पि वित्तचर्तिं नच मते सकृपणः स दिघस्त्वादृखिलोऽ नात्मवित् अपा सपुरुषार्थतया कृपणोभवति ॥ क ल्पते अर्थदातुम् । कृपू सामर्थ्ये। बाहुलकात् क्युन् । अतएवनल त्वम् ॥

कृपा । स्त्री । दयायाम् । अनुकम्पायाम् । प्रत्युपकारनिरपेक्षतया दीनजना भुजिघृक्षायाम् ॥ अमैते इतिव्याको कतिभित्तेस्त्रेहविशेषे ॥ कपयाम् । कपकृपायाम् । कपेः सम्प्रसारणञ्चे तिभिदादिपाठादङ् । टाप् ॥

कृपाणः । पु । खड्गे ॥ कृपाणधारागम नाद् आग्रकर्मावलम्बनात् । भुज कृपारथा सून मशफलं कुलवर्त्तनम् ॥ कृपामुदति । मुदसंरखे । अन्येभ्यो पीतिड. । पूर्वपदादितिणत्वम् ॥

कृपाणकः । पु । खड्गे । निस्त्रिंशे ॥ स्वार्थे कन् ॥

कृपाणिका । स्त्री । कृपाण्याम् ॥ स्वा० कः । प्रत्ययस्थादितीत्वम् ॥

कृपाणी । स्त्री । कर्त्तर्याम् ॥ छुरिका याम् ॥ असिपत्रायाम् ॥ कृपाणमया ति । अयाज्ञञ्चे । कर्मण्यण् । ङीप् ॥

कृपाद्वैतः । पु । वृक्षभेदे ॥

कृपालु । त्रि । कृपायुक्ते । दयालौ ॥ कृपांलाति । लाआदाने । मित०डु ॥

कृपावान् । त्रि । कृपालौ ॥ कृपा अस्ति अस्यास्मिन् वा मतुप् ॥

कृपी । स्त्री । द्रोणाचार्यस्यपत्न्याम् ॥

कृपीटम् । न । उदरे ॥ तोये ॥ कल्प ते । कृपू० । तन्कृपिभ्य कीटन् । विपिने ॥ इन्धने ॥

कृपीटपालः । पु । केनिपाते ॥ समुद्रे ॥

कृपीटयोनि । पु । वह्नौ ॥ कृपीटस्य जलस्य योनि धूमजन्याम्भोधाना म् । अग्नेरापइतिश्रुतेश्च ॥ कृपीटं ज लं योनि रुत्पत्तिस्थानं मस्येतिवा । अद्भ्यो ग्नि र्ब्रह्मत क्षत्रमिति मनु स्मृतेः ॥

कृपीपतिः । पु । द्रोणाचार्ये ॥

कृपीपुत्रः । पु । }
कृपीसुतः । पु । } अश्वत्थाम्नि ॥

कृमि । पुं । कीटादिक्षुद्रजन्तौ । लीलाबु गौ ॥ लाक्षायाम् ॥ कृमिले ॥ खरे ॥ उदरजातकीटरोगे ॥ तदौषध यथा । बदरीकारवीमूलगुडाढ्येन समन्वितम् । अम्लिमासाधितं ज गुध्वा कृमीन् सर्वान् हरेच्छिवेति गारुडे १९४ अध्यायः ॥ क्रामति । क्रमुपा० । क्रमितमि प्रतिस्तम्भाम तश्चेतिइनि.सम्प्रसारणञ्च । क्रमेः

सम्प्रसारणमित्यत सम्प्रसारणानुवृत्ते ॥

कृमिकण्टकम् । न । चित्राङ्गे॥ विडङ्गे ॥ उदुम्बरे ॥ चित्रायाम् ॥

कृमिकोशोत्थम् । त्रि । कौशेये । रेशिम कपडा इतिभाषा ॥

कृमिघ्न । पु । पलाण्डौ ॥ कोलकन्दे॥ पारिभद्रे ॥ भल्लातके ॥ विडङ्गे ॥ कृमीन् हन्ति । अमनुष्यकर्त्तृके चेतिटक् । अत्पूर्वस्येतिनियमान्नणत्वम् ॥

कृमिघ्ना । स्त्री । हरिद्रायाम् ॥

कृमिघ्नी । स्त्री । धूम्रपत्रायाम् ॥ विडङ्गे ॥

कृमिजम् । न । अगुरुणि ॥ त्रि । कृमिजाते । कृमिभिर्जन्यते । जनी० । अन्येभ्योपीतिड ॥

कृमिजग्धम् । न । अगुरुणि । जोङ्गके ॥

कृमिजा । स्त्री । लाक्षायाम्॥

कृमिदन्तक. । पु । दन्तरोगविशेषे ॥ कृष्णच्छिद्र स्चल. स्रावी ससंरम्भो महारुज. । अनिमित्तरुजोवातात् सज्ञेय कृमिदन्तक. ॥

कृमिफल । पु । उदुम्बरे ॥ कृमय:फलेऽस्य ॥

कृमिरिपु. । पु । विडङ्गे ॥ कृमीणां-रिपु' ॥

कृमिला । स्त्री । अनेकप्रसवाम् । बहुसन्तानप्रसवायाम् ॥ त्रि । कृमियुक्ते ॥ कृमीन् लाति । ला० । क. ॥

कृमिवृक्ष । पु । कोषाम्रे ॥ ।

कृमिशङ्ख । पु । न । कृमिजलजे । जीवशङ्खे ॥

कृमिशत्रु । पु । विडङ्गे ॥

कृमिशुक्ति । स्त्री । जलशुक्तौ ॥

कृमिशैल । पु । } वल्मीके । वाँबी

कृमिशैलक । पु । } इति भाषा ॥

कृमीलक: । पु । वनमुद्गे ॥

कृवि । पु । तन्तुवायद्रव्ये । वापयन्त्रे । तांत इतिभाषा ॥ करोति क्रियते ऽनेनवा । डुकृञ्० । कृविघृष्विच्छविस्थविकिकीर्दिविरितिसाधु ॥

कृश । त्रि । अल्पे । सूक्ष्मे ॥ कृश्यते स्म । कृशतनूकरणे । अनुपसर्गात् फुल्लक्षीबेतिसाधु: ॥ कृशधने ॥

कृशर. । पु । कृसरे ॥ कृशराति । रा दाने । आतइतिक ॥

कृशरा । स्त्री । कृसरायाम् ॥ टाप् ॥

कृशशाख । पु । पर्पटे ॥

कृशाङ्ग: । त्रि । सूक्ष्माङ्गविशिष्टे ॥

कृशाङ्गी । स्त्री । प्रियङ्गुवृक्षे ॥ तन्वङ्ग्याम् ॥ कृशान्यङ्गान्यस्या ॥

कृशानु । पु । पावके । अनले ॥ चित्रकवृक्षे ॥ कृश्यति तनू करोति । कृशतनूकरणे । चइतन्यञ्जीतिकृशे

रानुक् ॥

कृशानुरेता । पु । सर्वज्ञे । धूर्जटौ । शिवे ॥ कृशानौ रेतो ऽस्य । देव्या सोढु मशक्यत्वाद्रेतो प्रक्षिप्त रेतः । इति पुराणम् । अतो ऽग्निभू कुमार ॥

कृशाश्वी । पु । नटे ॥ कृशाश्वेन प्रोक्त नटसूत्र मधीते । कर्मन्दकृशाश्वादिनि ॥

कृश्मिका । स्त्री । आखुकर्णीलतायाम् ॥

कृषक । पु । फाले ॥ वृषे ॥ त्रि । कर्षके ॥ कृषति । कृषविलेखने । कृषेर्वृद्धिश्चोदीचामितिकुन् ॥

कृषि । स्त्री । वैश्यवृत्तिवि० । अन्वते । खेती इति भाषा ॥ अन्नोत्पत्त्यर्थं भूमेर्विलेखनं कृषि ॥ कर्षणम् । कृष० । इक् कृष्यादिभ्य । इगुपधात् किदितीन् वा ॥

कृषिक । पु । फाले ॥ त्रि । कर्षके ॥ कृषति । कृष० । वृस्विकृषो. कि कन् ॥

कृषिका । स्त्री । फाले ॥ टाप् ॥

कृषिजीवी । पु । कृषिवृत्तौ । स्वयङ्कृतया ऽस्वयङ्कृतया वा कृष्या जीवति इति तथा ॥

कृषीवलः । त्रि । कर्षके । कृषिजीविनि ॥ कृषि रस्यास्ति । रजः कृष्या सुतिपरिषदोवलच् । वले इति दीर्घ ॥

कृष्कर. । पु । शिवे ॥ इति त्रिकाण्डशेष

कृष्टम् । त्रि । कृष्टिमत् क्षेत्रे । सीत्ये । जोता खेत इति भाषा ॥ कृष्यते स्म । कृष० । क्त ॥ आकृष्टे ॥

कृष्टपच्य । त्रि । धान्ये ॥ शालिषु ॥ कृष्टे स्वय मेव पच्यन्ते इत्यर्थे राजसूयसूर्य मृषोद्यरुच्यकुप्य कृष्टपच्या व्यथ्या इति क्यबन्तो निपातित. ॥ कृष्टेन पच्यते वा ॥

कृष्टपाक्यः । त्रि । कृष्टपच्ये ॥ शुद्धे कर्मणि ण्यत् ॥

कृष्टि । पु । पण्डिते । बुधे ॥ स्त्री । आकर्षे । कर्षणे ॥ कर्षति । कृष० । क्तिच ॥ था० लिर्वा । सपापूर्वकत्वात्लगुण. ।

कृष्ण । पु । भगवतो ऽवतारविशेषे । केशवे । वासुदेवे । देवकीनन्दने । भक्तदुःखःकर्षिणि ॥ भक्तानां पापादिदोषान् सर्वथा निवारयितु मशक्यानपि कृषतिनिवारयति तेषा मेवसर्वथा प्राप्तु मशक्यानपि पुरुषार्थान् आकर्षति प्रापयतीति वा ॥ यथा । स्मरणादेवकृष्णस्य सिद्धान्ति सर्वसिद्धय. । स्मृते

सकलकल्याणभाजनं यन्न जायते। पु रुषं तमजं नित्यं व्रजामि शरणं हरिम्। स्मरणादेव कृष्णस्य पापसङ्घातपञ्जरम्। शतधा भेदमाप्नोति गिरिर्वज्रहतो यथेति कृष्णस्मरणमाहात्म्यम्॥ अस्य जन्मसमय उक्तो ख माणिक्यनामनि ज्योतिर्ग्रन्थे। उच्चस्था. शशिभौमचान्द्रिशनयो लग्न दृषो लाभगो जीवः सिंहतुलालिषु क्रमवशात् पूषोशनोराहवः। नैशीथ. समयोऽष्टमी बुधदिनं ब्रह्मर्क्षमत्र क्षणो श्रीकृष्णाभिधमम्बुजेक्षणमभूदाविः परंब्रह्मतदिति॥ जनं जनेन जनिता जनं पाति जनेन यः। जनं जनेन हरति तं कृष्णं भजसाम्प्रतम्॥ परब्रह्मणि॥ यथा। कृषि र्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परंब्रह्म कृष्ण इत्यभिधीयते॥ पाराशर्ये। वेदव्यासे॥ अर्जुनपाण्डवे॥ वायसे। काके॥ कोकिले॥ करमर्दके॥ वर्णविशेषे। नीले। श्यामे। मेचके॥ न। मरिचे॥ लोहे॥ नीलाञ्जने॥ कालागुरुणि॥ अशुभकर्मणि॥ त्रि। मेचकवर्णवति॥ कर्षतिमनः। कृष०। कृषेर्वर्णेइतिनक्॥ यद्वा। कर्षत्यरीन्। वाहुलकात्वर्णे विनापि नक्॥ कृष्णोवर्णोऽस्यास्ति वा कृष्णः। नगन्तात गुणवचनेभ्यो मतुपोलुगिति लुक्॥

कृष्णकन्दम्। न। कैरवे। निशाह्वे॥ इति त्रिकाण्डशेष॥ कृष्णः कन्दोऽस्य॥

कृष्णकर्म्मा। त्रि। दुराचारे। पापाचारयुक्ते॥ कृष्णङ्कर्मास्य॥ कृष्णापितकर्मणि॥

कृष्णकलि। स्त्री। गुलालफूल इति प्रसिद्धे कृष्णकेलौ इति गौडाः॥

कृष्णकाय। पु। महिषे॥ त्रि। श्यामतनौ॥ कृष्णः कायोऽस्य॥

कृष्णकाष्ठम्। न। कालागुरुणि॥

कृष्णकोहल। पु। द्यूतकृति। अक्षदेविनि॥ कृष्णोऽशुभ कोहलोऽस्य॥

कृष्णगन्धा। स्त्री। शोभाञ्जने॥

कृष्णगर्भ। पु। कट्फले॥

कृष्णचञ्चुक। पुं। चणके॥

कृष्णचतुर्द्दशी। स्त्री। कृष्णपक्षीयचतुर्दश्याम्। भूते॥ कृष्णचासौचतुर्द्दशीच॥

कृष्णचन्दनम्। न। हरिचन्दने। पीतचन्दने॥ कृष्णञ्चचन्दनम्॥

कृष्णचर। त्रि। कृष्णस्यभूतपूर्वंगवादौ भूतपूर्वेचरट्॥

कृष्णचूडा। स्त्री। स्वनामाख्यगौडेषुप्रसिद्धे पुष्पवृक्षे। गुलतुरा इतियव

नेषु प्रसिद्धे ॥

कृष्णचूडिका । स्त्री । गुञ्जायाम् ॥

कृष्णचूर्णम् । न । लौहमले ॥

कृष्णजटा । स्त्री । जटामांस्याम् ॥

कृष्णजीरक । पु । सुपथ्याम । कारव्याम् । कालाजीरा इति भाषा ॥ कृष्णश्चासौ जीरकश्च ॥

कृष्णतण्डुला । स्त्री । कर्णस्फोटायां लतायाम् ॥

कृष्णतामम् । न । गोशीर्षचन्दने ॥

कृष्णतारः । पु । हरिणे ॥

कृष्णत्रिवृता । स्त्री । त्रिवृताभेदे । पालिन्द्याम् । श्यामायाम् । कालतेउडी इति गौडभाषा ॥ कृष्णा चासौ त्रिवृता च ॥

कृष्णदन्ता । स्त्री । काश्मरीवृक्षे ॥

कृष्णदेह । पु । भ्रमरे ॥ त्रि । कृष्णवर्णशरीरे ॥ कृष्णो देहोऽस्य ॥

कृष्णद्वैपायन. । पु । वेदव्यासे ॥ यथा। कृष्णद्वैपायनं व्यासं विद्धि नारायणं विभुम् । को ह्यन्यः पुण्डरीकाक्षा न्महाभारत कृद्भवेदिति विष्णुपुराणम् ॥ द्वीपमयनं जन्मभूमिर्यस्य स । द्वीपायनएव । प्रज्ञाद्यण् । द्वीपंयमुनाद्वीप मित्यर्थः ॥ कृष्णः कृष्णवर्णत्वात् कृष्णश्चासौ द्वैपायनश्च ॥

कृष्णधत्तूरक । पु । कालाधतूरा इति भाषाप्रसिद्धे कृष्णपुष्पे । विषारातौ । कृरधूर्त्ते । शिवे । सिद्धे ॥ सितनीलकृष्णलोहितपीतप्रसवास्सन्ति - धत्तूरा. । सामान्यगुणोपेता स्तेषुगुणाढ्यस्तु कृष्णकुसुम' स्यादितिराजनिर्घण्ट ॥

कृष्णपक्ष. । पु । सितेतरपक्षे । असितपक्षे ॥ स तु प्रतिपदाद्यमावास्यान्तपञ्चदशदिनात्मक । यथा । तत्र पक्षौ बुभौ मासे शुक्लकृष्णौ क्रमेणहि । चन्द्रवृद्धिकरः शुक्ल. कृष्णश्चन्द्रक्षयात्मक ॥ पक्षद्वयास्तु तिथयः क्रमात् पञ्चदशस्मृताः । दर्शान्ता. कृष्णपक्षेता पूर्णिमान्तास्तुशुक्लके ॥ इति तिथ्यादितत्त्वम् ॥

कृष्णपर्णी । स्त्री । कालतुलस्याम् ॥

कृष्णपाक' । पु । करमर्द्दके ॥ कृष्णःपाकोऽस्य ॥

कृष्णपाकफलः । पु । करमर्द्दे ॥ कृष्णपाकफलमस्य ॥

कृष्णपिङ्गला । स्त्री । चण्ड्याम् । दुर्गायाम् ॥

कृष्णपिण्डीतक. । पु । कृष्णपिण्डीरवृक्षे । वराहे ॥

कृष्णपिण्डीर. । पु । कृष्णपिण्डीतके ॥

कृष्णपिपीली । स्त्री । कृष्णवर्णायाम्पिपीलिकायाम् । दृष्टकटायाम् । स्थू

खायाम् ॥

कृष्णपुच्छ. । पु । लोमड़ी इतिभाषा प्रसिद्धे वन्यजन्तुविशेषे । किखैा ॥

कृष्णपुष्प । पु । कृष्णधत्तूरके ॥

कृष्णपुष्पी । स्त्री । प्रियङ्गुवृक्षे ॥

कृष्णफल । पु । करमर्दके ॥ कृष्णानि फलान्यस्य ॥

कृष्णफलपाक. । पुं । करमर्दके । करौंदा इतिभाषा ॥

कृष्णफला । स्त्री । सोमराज्याम् ॥ कृष्णानिफलान्यस्या. ॥ कोलशिम्ब्याम् ॥ अजादित्वाट्टाप ॥

कृष्णभूकुष्माण्ड ।पु । विदार्याम् ॥

कृष्णभूम । त्रि । कृष्णवर्णमृत्तिकायुक्ते देशे ॥ कृष्णोदगित्यच् ॥

कृष्णभूमिजा । स्त्री । गोमूत्रिकातृणे ॥

कृष्णभेदा । स्त्री । कटुकायाम् ॥ कृष्णो वर्णेन भेद श्छेदोऽस्या. ॥

कृष्णभेदी । स्त्री । कटुक्याम् । कटुरोहिण्याम् ॥ कृष्णं मलम्भिनत्ति । कर्मण्यण् । ङीप् ॥

कृष्णमल्ली । पु । पवनव्याधौ । उद्धवे ॥

कृष्णमल्ली । स्त्री । कृष्णमल्लिकायाम् । वनवर्वरे । वर्वर्याम् । काली तुलसी इतिभाषा ॥

कृष्णमृग । पु । काला मृग इतिप्रसिद्धे मृगे । वासन्ते । सुराष्ट्रजे ॥

कृष्णमूखी । स्त्री । शारिवाविशेषे ॥

कृष्णमृत्तिक । पु । कृष्णभूमे ॥

कृष्णमृत् । स्त्री । काली मिट्टी इतिप्रसिद्ध कृष्णवर्णाया मृदि । कृष्णभूमौ ॥ कृष्णमृत् मलदाहास्रप्रदरश्लेष्मपित्तनुत् ॥

कृष्णरुहा । स्त्री । जतुकालतायाम् ॥

कृष्णरूप्य । त्रि । कृष्णचरे ॥

कृष्णलम् । न । रक्तिकायाम् । रत्ती घुघुची चिरमुठी इतिभाषा ॥ त्रिभिर्यवैस्त्रिभिरेतैर्माने ॥ सर्षपा: षट् यवो मध्य स्त्रियवन्त्वेककृष्णलम् ॥

कृष्णलक. । पु । गुञ्जायाम् ॥

कृष्णलवणम् । न । सौवर्चललवणे । कालानूण इति भाष ॥ कालवणे ॥

कृष्णला । स्त्री । रक्तिकायाम । गुञ्जायाम् ॥ कृष्णं वर्णं लाति । लादाने । आतोनुपेतिक' ॥ यद्वा । कृष्णो वर्णोऽस्त्यस्या' । सि० लच् ॥

कृष्णलोहम् । न । अयस्कान्ते ॥

कृष्णलोहित । पु । धूम्रवर्णे । कृष्णारक्तमिश्रवर्णे ॥ त्रि । धूम्रवर्णवति ॥ कृष्णमिश्रोलोहित, । शा० ॥

कृष्णवक्त्र: । पु । वानरे ॥ इति हलायुध ॥ त्रि । श्याममुखे ॥

कृष्णवर्ण । पु । शूद्र ॥ विधुन्तुदे । कृष्णोवर्णोऽस्य ॥

कृष्णवर्त्मा । पु । अग्नौ । आश्रयाशे ॥ कृष्णाधूमो वर्त्मास्य ॥ दुराचारे ॥ विधुन्तुदे ॥ चित्रकदृक्षे ॥

कृष्णवर्वरक । पु । वर्वरदृक्षे ॥

कृष्णवल्लिका । स्त्री । जतुकालतायाम् ॥

कृष्णवल्ली । स्त्री । कृष्णार्जके ॥ सारिवा विशेषे ॥

कृष्णवानर । पु । कपौ । गोलाङ्गूले ॥

कृष्णवीज । पु । रक्तशिग्रौ ॥ न । कालिङ्गे । कलौंदा इति भाषा प्रसिद्धे फले ॥

कृष्णवृन्ता । स्त्री । पाटलादृक्षे ॥ माषपर्ण्याम् ॥ कृष्णं वृन्तमस्याः ॥

कृष्णवृन्तिका । स्त्री । गम्भार्याम् ॥ कृष्णवृन्तायाम् ॥

कृष्णवेणा । स्त्री । सरिद्विशेषे ॥

कृष्णशार । पु । कालसारमृगे । कृष्णसारे ॥ कृष्णश्चासौ शारश्चेति अवयवस्य वर्णो वर्णेनेतिसमास ॥

कृष्णशालि । पु । कालधान इति गौडभाषा प्रसिद्धे धान्य विशेषे । श्यामशालौ ॥ कृष्णशालिस्त्रिदोषघ्नो मधुरः पुष्टिकृन्मतः । पुष्टिवीर्यवर्द्धनस्य वर्णकान्तिबलप्रदः इत्यस्यगुणाः ॥

कृष्णशिंबिका । स्त्री । काकाण्ड्याम् ॥ कृष्णवर्णा शिम्बिका ॥

कृष्णशिग्रुः । पुं । शोभाञ्जने ॥

कृष्णशृङ्ग । पु । महिषे । कुसापे ॥

कृष्णसख । पु । अर्जुनदृक्षे ॥ अर्ज्जुने ॥ कृष्णस्य सखा । टच् ॥

कृष्णसखी । स्त्री । जीरके ॥ इति शब्दचन्द्रिका ॥

कृष्णसर्षप । पु । राजसर्षपे । राजिकायाम् ॥

कृष्णसार । पु । कृष्णाम् ॥ मृगविशेषे । कालसारे ॥ कृष्णसारस्तु चरति मृगो यत्र स्वभावत ॥ खदिरे ॥ कृष्णामसार, शबल । इतायेतिवेर्णविभागात् समास. ॥

कृष्णसारथि । पु । पार्थे । धनञ्जये ॥ अर्जुनवृक्षे ॥

कृष्णसारा । स्त्री । शिंशपादृक्षे ॥ कृष्णः सारोऽस्या. ॥

कृष्णस्कन्ध । पु । कालस्कन्धे । तमालदृक्षे ॥

कृष्णा । स्त्री । द्रौपद्याम् ॥ नीलीदृक्षे ॥ कणायाम् ॥ द्राक्षायाम् ॥ नीलपुनर्नवायाम् ॥ कृष्णजीरके ॥ गम्भार्याम् ॥ कटुकायाम् ॥ सारिवाविशेषे ॥ राजसर्षपे ॥ पर्प्यामम् ॥ काकोल्याम् ॥ सोमराज्याम् ॥ नदीविशेषे ॥ निर्ऋते. पुर्य्याम् ॥ कृष्णा दैत्यपतेर्मन्त्योर्धामवद् दैत्यसेविता । नीलरत्नप्रभाजालभ्रितानवरभूषणा ॥ धू

मादिगतौ । ज्ञानहीनत्वेन तमोमयत्वात् दक्षिणमार्गत्वेन तन्त्रप्रसिद्धे पितृयाणमार्गे ॥ कृष्णवर्णायाञ्च त्रि । अनुदात्तत्वाभावान्नङीष् ॥ कृष्णवर्णोऽस्यस्या । अर्शआद्यच् ॥

कृष्णागुरु । न । । अगुरुणि । कालागुरुणि । कृष्णकाष्ठे । धूपार्हे ॥ कृष्णागुरुणाधिकतत्तु लोहत्र हारिमञ्जति ॥ अगुरुप्रभव. स्नेह कृष्णागुरुसम. स्मृत ॥

कृष्णाचल । पु । रैवताद्रौ ॥ कृष्णस्याचलस्य ॥

कृष्णाजिनम् । न । कृष्णसारचर्मणि ॥

कृष्णाञ्जनी । स्त्री । कालाञ्जनीवृक्षे ॥

कृष्णानदी । स्त्री । कृष्णसमुद्भवायाम् । कृष्णगङ्गायाम् ॥ स्वच्छमज्जाजलंच पावनदीपनंमतम् ॥

कृष्णाभा । स्त्री । कालाञ्जन्याम् ॥

कृष्णामिषम् । न । कृष्णलोहे ॥इ० हे० ॥

कृष्णायसम् । न । कृष्णवर्णलोहे । काललोहे ॥

कृष्णार्चि. । पु । अग्नौ ॥

कृष्णार्जक. । पु । कालीतुलसी इति भाषा प्रसिद्धे । गरघ्ने । वनबर्बरे ॥

कृष्णालु । पु । नीलालौ ॥

कृष्णावास । पु । अश्वत्थवृक्षे ॥ कृष्णस्य आवासोऽस्मिन् ॥

कृष्णिका । स्त्री । राजिकायाम् । राइ इति भाषा ॥ कृष्णेव । सञ्ज्ञायाकन् ॥

कृष्णेक्षु । न । काजली ईख इति प्रसिद्धे कोकिलाक्षे । श्यामेक्षौ ॥

कृष्णेतर । पु । शुक्लपक्षे ॥

कृष्णोदुम्बरिका । स्त्री । काकोदुम्बरिकायाम् ॥

कृष्या । स्त्री । कर्षणार्हायाम् ॥

कृसर. । पु । तुल्यतिलान्ने ॥ तिलतण्डुलसम्पक्क. कृसर सोऽभिधीयते ॥ क्रियते । डुकृञ् । कृधूमदिभ्य कित् इतिसर । बा० नपत्वम् ॥

कृसरा । स्त्री । खिचरीति लोकप्रसिद्धे द्विदलमिश्रितौदने ॥ तण्डुला दालिसम्मिश्रालवणार्द्रकहिङ्गुभि. । संयुक्ता सलिले सिद्धा कृसराकथितावुधै ॥ कृसराशुक्लबल्यागुरु. पित्तकफप्रदा । दुर्जरापुष्टिविष्टम्भमलमूत्रकरी स्मृता ॥

कृप्त । त्रि । रचिते । कृतकल्पने ॥ नियते ॥

कृप्तकीला । स्त्री । पट्टोलिकायाम् ॥ । व्यवस्थापत्रे ॥ इति चिकापत्रशेष ॥

कृप्तधूप । पु । सिह्लके ॥

कृप्तिक. । त्रि । क्रीते ॥ इतिशब्दायुधः ॥

केकयः । पु । सूर्यवंशीयराजविशेषे ॥

कावख इति ख्याते देशविशेषे ॥

केकयी । स्त्री । भरतमातरि । दशरथ राजपत्न्याम् ॥ केकयस्य दुहिता । सङ्कोचेमानाभावा ज्जन्यजनकभावोपि पुयोग इति पुयोगादाख्यायामितिङीष् ॥

केकर । त्रि । वलिरे । ऐञ्चातानाइति भाषा प्रसिद्धे निम्नोन्नताक्षिपुरुषे । टेरके ॥ केमूर्ध्निकरः ग्रीवमस्य । कृत्तोहेतुताच्छील्यानुलोम्येष्विति टः ॥ हलदन्तादित्यलुक् ॥

केका । स्त्री । मयूरस्ववाण्याम् ॥ केमूर्ध्निकायते । कैशब्दे । अन्येभ्योपीतिड. । हलदन्तात सप्तम्याः संज्ञायामित्यलुक् ॥

केकावल. । पुं । मयूरे ॥

केकिकः । पु । केकावलि । मयूरे ॥ व्रीह्यादिभ्यश्चेति ठन् ॥

केकी । पु । मयूरे ॥ केक ऽस्यस्य । व्रीह्यादिभ्यश्चेति पक्षे इनि ॥

केचन । अ । केचिदित्यर्थे ॥

केचित् । अ । केचनेत्यर्थे ॥

केचुकम् । न । शाकविशेषे । नाडीचे । विश्वरोचने ॥

केचिका । स्त्री । पटकुट्याम् । तंबूटी इतिभाषा ॥

केतः । पु । अभिनवमन्दिरे ॥ केतनम् । कित० । घञ् ॥

केतक । पु । केवडा इतिख्याते केतकीदृक्षे ॥ केतक सूचिकापुष्पो जम्बुक क्रकचच्छद । सुवर्णकेतकीत्वन्यालघुपुष्पासुगन्धिनी ॥ केतक. कटुक स्वादुर्लघु स्तिक्त' कफापह. ॥ न । केतक्या पुष्पे ॥ केतक्या' पुष्पम् केतकम् । पुष्पमूलेषु बहुलमित्यणोलुक् । नादि इविः । लुक् तद्धितलुकीतिस्त्रीप्रत्ययस्यलुक् ॥

केतकी । स्त्री । टणद्रुमान्तरे । स्वची पुष्पे । धूलिपुष्पिकायाम् ॥ केतयति । कितनिवासादैा । क्वुन् । वुल्वा । गैाराद्त्वात् ङीष् ॥

केतनम् । न । सदने । गृहे ॥ निमन्त्रणे ॥ केता । ध्वजे । चिह्ने ॥ कृत्ये ॥ केयते मायते ऽनेन । कित० । भावकर्मकरणाधिकरणेषुल्युट् ॥ स्थाने ॥

केतित । त्रि । निमन्त्रिते ॥ केतितस्तु यथान्यायं हव्यकव्येष्वतन्द्रित. । कर्थञ्चिदप्यतिक्रामन्नपाम शूकरतां ब्रजेत् ॥

केतु' । पु । वह्नि । द्युतैा ॥ पताकायाम् ॥ लक्षणि । चिह्ने ॥ रिपैा ॥ नवमग्रहे । राहो शरीरे । शिखिनि ॥ सद्योत्पातरूप. ॥ यथा । ना

केतु

किरणाश्च पञ्चविंशति रश्मिखा ।
प्रागपरदिशो दृश्यान्तपति विरोधा
वहा रविजा ॥ अग्निपुत्रा स्तावन्त
दृश्याह । शुकदहनमन्धुजीवकला
लाक्षतलेोपमा हुताशसुता । आ
ग्नेय्यां दृश्यन्ते तावन्त स्तेपि शि
खिभयदा ॥ मृत्युसुता स्तावन्त आ
ह वक्राशिरा मृत्युसुता रूक्षा. कृ
ष्णाश्च तेपि तावन्त । दृश्यन्ते याम्या
या जनमरकावेदिन स्तेच ॥ भूमि
पुत्रा द्वाविंशतिरेवाह । दर्पणवृत्ता
कारा विशिखा किरणान्विताधरा
तनया । चन्द्रदा द्वाविंशति रैशा
न्या मकुतैलनिभा ॥ चन्द्रसुता स्त्र
य । शशिकिरणरजतहिमकुमुद
कुन्दकुसुमोपम. सुता शशिन ।
उत्तरते. दृश्यन्ते चय सुभिक्षावहा
शिखिन ॥ ब्रह्मदण्डस्य स० ॥
ब्रह्मसुत एक एव त्रिशिखो वर्ण्यैः
स्त्रिभि युगान्तकर । अनियतदिक्
सम्भवो विज्ञेयो ब्रह्मदण्डाख्य ॥
एकाधिकं शत कथित मन्यानि नव
शतान्यकोनानि कथनीयानी त्याह
। शत मभिहित मेकाधिक मेकेन
विरचिता न्यस्मात् । कथयिष्ये
केतूनां शतानि नवचाष्टो स्य
हेः ॥ शुक्रपुत्रा श्चतुरशीतिसङ्-

केतु

ख्या स्तानाह । सौम्यैशान्यो रुदय
शुक्रसुता यान्ति चतुरशीत्याख्या ।
विपुलसिततारका स्ते स्निग्धाश्च भ
यन्तितीव्रफला ॥ षष्टि शनैश्चर
पुत्रा । स्निग्धा प्रभासमेता द्विशि
खाः षष्टि शनैश्चराङ्गरुहा । अति
कष्टफला दृश्या सर्वैवैतेकनकसं
ज्ञा ॥ गुरुपुत्रा पञ्चषष्टि । विक
चा नाम गुरुसुता सितैकतारा ।
शिखापरित्यक्ता. । षष्टि पञ्चभिर
धिका स्निग्धा याम्याश्रिता. पापा ॥
एकपञ्चाश बुधपुत्रा. । नातिव्यक्ता
रूक्षा दीर्घा शुक्ला यथेष्टदिक्प्र
भवा: । बुधजा स्तस्करसंज्ञा पापफ
ला स्त्वेकपञ्चाशत् ॥ भौमपुत्रा. ष
ष्टि । क्षतजानलाऽनुरूपा स्त्रिचूल
तारा. कुजात्मजा षष्टि. । नाम्ना च
कौङ्कुमा स्ते सौम्याशासंस्थिता पा
पा ॥ त्रयस्त्रिंशद्राहुपुत्रा. । त्रिंशत्
त्र्यधिका राहोस्ते तामसकीलकाख्या
तिख्याता । रविशशिगा दृश्यन्ते
तेषां फलमर्कचारोक्तम् ॥ कर्णचा
राख्यं तामसकीलकसंज्ञा राहुसुताः
केतवइत्यादिनेत्यर्थ: । विंशत्यधि
कं शत मग्निपुत्राणाम् । विंशत्य
धिक मान्य त्कृत मग्ने र्विश्वरूपस
ञ्ज्ञानाम् । तीव्रानलभयदानां ज्वा-

केतुः

सामासाभिरा कुलतनूनाम् ॥ सप्त सप्तति र्वायुपुत्रा । श्यामाववणा वितारा श्वामरूपा विकीर्णदीधितय । अरुणास्था स्ते वायो सप्त च सप्तति पापदा परुषा ॥ प्रजापति सुतान् ब्रह्मा पुत्रांश्चाह । तारापुञ्जनिकाशा गणका नाम प्रजापते र्ह्टे । द्वे च शते चतुरधिके चतुरस्रा ब्रह्मसन्ताना ॥ द्वात्रिंशद्वरुणपुत्रा नाह । कङ्का नाम वरुणजा द्वात्रिंशद् वंशगुल्मसंस्थाना । शशिवत प्रभासमेता स्तीव्रफला केतव प्रोक्ता ॥ षण्णवति कालपुत्रा । षण्णवति कालपुत्रा कवन्धसञ्ज्ञा कवन्धसंस्थाना । पुण्ड्रा भयप्रदा स्युर्विरूपतारा स्तु ते शिखिनः ॥ नव विदिक्पुत्रा, सर्वेषां च सञ्ज्ञा मन्येषाञ्च विशेषं वक्ष्यामीत्याह । शुक्लविपुलैकतारा नव विदिशां केतव समुत्पन्ना । एवं केतुसहस्रं विशेष मेषा मतो वक्ष्ये ॥ तत्र ये दृश्यन्ते तेषां लक्षणं वक्तुकाम सन्नादावेव वसाकेते र्लक्षणमाह । उदगायतो महान् स्निग्धमूर्तिरपरोद यो वसाकेतुः । सद्य करोति मरकं सुभिक्षमप्युत्तमं कुरुते ॥ अस्थिकेतो, र्लक्षणस्य ल० । तत्तुल्यो ऽस्थिकेतुः सतु रूक्षः क्षुद्भयावह प्रोक्त । स्निग्ध स्तादृक् प्राच्यां शस्त्राख्यो डमरमरकाय ॥ कपालकेतो र्ल० । दृश्यो ऽमावास्यायां कपालकेतु स धूम्ररश्मिशिखः । प्राक् नभसो ऽर्द्धविचारी क्षुन्मरकावृष्टिरोगकर ॥ रौद्रकेतोर्ल० । प्राग् वैश्वानरमार्गे शूलाग्र श्या वरूक्षताम्राचिं । नभस स्त्रिभागगामी रौद्र इति कपालतुल्यफल ॥ चलकेतोर्ल० । अपरस्यां चलकेतु, शिखया याम्याग्रयाङ्गुलोच्छ्रितया । गच्छेद्यथायथोदक् तथातथा दैर्घ्य मायाति ॥ सप्त मुनीन् संस्पृश्य ध्रुवमभिजित मेव च प्रतिनिवृत्त । नभसो ऽर्द्धं भाग मित्वा याम्येनास्तं समुपयाति ॥ हन्यात् प्रयागकूलाद् यावदवन्तीं च पुष्करारण्यम् । उदगपि च देविका मपि भूयिष्ठ मध्यदेशाख्यम् ॥ अन्या नपि च स देशान् क्वचित् क्वचिद्धन्ति रोगदुर्भिक्षे । दश मासान् फलपाको ऽस्यकैश्चिदष्टादश प्रोक्त ॥ श्वेतकेतो र्ल० १. प्रा गर्द्धरात्रदृश्यो याम्याग्र, श्वेतकेतु रन्यश्च । कङ्कति युगाकृति रपरे युगपत्तौ सप्तदिनदृश्यौ ॥ स्निग्धौ सुभिक्षशिवदौ तथाधिकं दृश्यते कुनामा य

केतु:

दृश वर्षाण्युपतापं जनयति मस्तप्र
कोपकृतम् ॥ श्वेतस्य लक्षणम्। श्वे
त इति जटाकारो कृष्ण. श्यावो वि
यत्त्रिभागगत. । विनिवर्त्तते ऽपस
व्यं शिखा नयेष प्रजा. कुरुते ॥ रश्मि
केतो र्ल० । आधूम्रया ऽ ति शिखया
दर्शन मायाति कृत्तिकासंस्थ.। श्चेय
स रश्मिकेतु' श्वेतसमानं फलं धत्ते
॥ ध्रुवकेतोर्ल०। ध्रुवकेतु रनियति
गतिप्रमाणवर्णाकृति र्भवति विष्वक्
। दिव्यान्तरीक्षभौमो भव त्ययंस्नि
ग्ध इष्टफल ॥ सेनाङ्गेषु नृपाणां गृ
हतरुशैलेषु चापि देशानाम्। गृहि
णा मुपस्करेषु च विना शिनां दर्शन
याति ॥ कुमुदकेतो र्ल० । कुमुद
इति कुमुदकान्ति र्वारुण्यां प्राक्शि
खो निशा मेकाम् । दृष्ट' सुभिक्ष
मतुलं दश शिख वर्षाणि स करोति
॥ मणिकेतो र्ल० । सकृदेकयामदृ
श्यः सुसूक्ष्मतारो पश्चिमा मणिकेतु ।
ऋज्वी शिखाऽस्य शुक्ला स्तनोद्गता
क्षीरधारेव ॥ उदयन्नेव सुभिक्ष च
तुरो मसान् करो त्यसौ सार्द्धान् ।
प्रादुर्भावं प्राय: करोति च क्षुद्र ज
न्तूनाम् ॥ जलकेतो र्लंक्षणम्।
जलकेतु रपि च पश्चात स्निग्ध। शिख
या परेणचो न्नतया। नव मासान् स

केतु.

सुभिक्ष करोत शान्तिञ्च लोकस्य॥
भवकेतोर्ल० । भवकेतु रेकरात्रं दृ
श्य प्राक् सूक्ष्मतारक: स्निग्ध' । ह
रिश्चाङ्गूलोपमया प्रदक्षिणा वर्त्तया
शिखया ॥ यावत एव मुहूर्त्तान् द-
र्शन मायाति निर्दिशेन्मासान्। ताव
त्सुख सुभिक्षं कृष: प्राणान्तिकान्
रोगान् ॥ पद्मकेतो र्ल० । अपरेण
पद्मकेतु र्मृणालगौरो भवे न्निशा
मेकाम्। सप्त करोति सुभिक्षं वर्षा
ण्यतिहर्षं युक्तानि ॥ आवर्त्तकेतो
र्ल० । आवर्त्त इति निशार्द्धे सव्य
शिखो ऽ रुणनिभो ऽपरे स्निग्ध.।
यावत्क्षणान स दृश्य स्ताव न्मासा
न सुभिक्षकर ॥ संवर्त्तकेतो र्ल०।
पश्चात् सन्ध्याकाले संवर्त्तो नाम
धूम्रताम्रशिख । आक्रम्य वियतस्त्र्य
श शूलाग्रावस्थिता रौद्र: ॥ यावत
एव मुहूर्त्तान् दृश्यो वर्षाणि हन्ति
तावन्ति। भूपान् शस्त्रनिपातै रुद-
यर्क्षञ्चापि पीडयति ॥ अथशुभान्
केतून् वर्जयित्वा ऽ शुभानां नक्षत्र
शं वा धूपनाद् दुष्टफलं वक्ष्यामीत्या
ह। ये शस्ता स्तान् हित्वा केतुभिरा
धूपिते ऽथवा स्पृष्टे। नक्षत्रे भवति व
धो येषां राज्ञां प्रवक्ष्ये तान् ॥ अश्वि
न्या मश्मकपं भरण्यां किरातपा

थिवं हन्यात् । वङ्गुलासु कलिङ्ग मं रोहिण्यां शूरसेनपतिम् ॥ औ शीनर मपि सौम्ये जलजाजीवाधि पतथार्द्रासु । आदित्ये ऽश्मकनाथ पुष्ये मगधाधिपं हन्ति ॥ असिकेशं भौजङ्गे पित्र्ये ऽङ्गं पाण्ड्यनाथ मपि भाग्ये । औज्जयनिक मार्यम्णे सा वित्रे दण्डकाधिपतिम् ॥ चित्रासु कुरुक्षेत्राधिपस्य मरणं समादिशे त्तज्ज्ञ ॥ काश्मीरककाम्बोजौ न्त्र पती प्राभञ्जने न स्त ॥ इक्ष्वाकुर लकनाथ श्च हन्यते यदि भवे द्वि शाखासु । मैत्रे पुण्ड्राधिपति ज्येष्ठा सु च सार्वभौम वध ॥ मूले न्ध्रमद्र कपती जल दैवे काशिपो मरणमे ति । यौधेयकार्जुनायनशिविचै द्यान् वैश्वदेवे च ॥ हन्यात् कैकय नाथं पाञ्चनदं सिंहलाधिपं वाङ्गम् । नैमिषनृपं किरातं श्रवणादिषु षट्स्विमान् क्रमश ॥ केतो र्वि शेष माह । उल्काभिताडितशिख' शिखी शिव शिवतरो ऽभिदृष्टो य । अशुभ स एव चोलातङ्गणासित हूणचीनानाम् ॥ विशेषान्तरमाह । नमायत, शिखिशिखाभिस्तहतो य तोवा नृपंच यत् स्पृशति तत्वधि तांश्च देशान् । दिव्यप्रभावनिहता न स यथागतस्मान् भुङ्क्ते गतो न रपति' परभोगिभोगान् ॥ इतिवा राहीसंहितायां केतुचारनामाध्या य एकादश ॥ चाय्यते ऽनेनवा । चायृपूजादौ । चाय. किरितितुः ॥

**केतुग्रहम्** । न । मीनराशौ ॥

**केतुग्रहवल्लभम्** । न । वैदूर्यमणौ ॥

**केतुभ.** । पु । मेघे ॥

**केतुमालम्** । न । जम्बुद्वीपस्य नवख ण्डान्तर्गते खण्डविशेषे ॥ सुकेतनं केतुमाल प्रतीच्यां गन्धमादनात् ॥

**केतुरत्नम्** । न । वैदूर्यमणौ ॥

**केदर.** । पु । वृक्षविशेषे ॥ त्रि । टेरके ॥

**केदार** । पु । अद्रिविशेषे ॥ वदर्या' स मीपेक्षेत्रविशेषे ॥ यथा । केदारा ख्ये महाक्षेत्रेदेवी सामार्गदायनी तिदेवीगीता ॥ शिवे ॥ भूमिप्रभे दे ॥ आलवाले ॥ खेत इति प्रसिद्धे क्षेत्रे । क्यार इति भाषा ॥ केदा र वारि मधुरं विपाकें गुरु दोषल म् । तद्वेव बहुमुक्तन्तु विशेषाद्दोषदं भवेत् ॥ के जले शिरसिवा दारोऽ स्य । अलुगन्तादित्यलुक ॥ केन ज लेन दीर्यते वा । दृविदारणे । क र्मणि घञ् । केदाराद्यञ्चेतिनिर्देशा देत्वम् ॥

**केदारकटुका** । स्त्री । कटुकायाम् ॥

ध्वौ माखिङ्ग्य सुन्दरीम् । कारये त् स्थापन कामी वन्ध. केयूरसंज्ञक इति ॥ अपिच । स्त्रीणां जङ्घा स्तराविष्टो गाढमाखिङ्ग्य सुन्दरीम्। कामये द्विपुलकामी वन्ध. केयूरसंज्ञक इति ॥

केरल । पु । मल्लेवार इति प्रसिद्धे देशवि० ॥ यथा । उग्रा केरलपर्याया इतिहेमचन्द्र. ॥ सुब्रह्मण्यं समारभ्य यावद्देवो जनार्दन. । तावत् केरलदेश स्यात् तन्मध्ये सिद्धकेरल ॥ रामेश्वरात् ब्बङ्कटेशा इसकेरल नामक । अनन्तशेष मारभ्य यावत् स्या इच्छयंपरे ॥ तावत् सर्वमना मा तु केरल परिकीर्त्तितइति॥ वेदयागानधिकारिश्मश्रुधारिम्लेच्छवि० । पुरैते क्षत्रिया आसन् सगरेणै षां धर्मोनाश्रित वेशान्यत्वं च कृतम् । यथा । नि. स्वाध्यायवषट्कारा. कृता स्तेन महात्मना । शका यवन काम्बोजा पारदा पह्लवा स्तथा ॥ कोलिसर्पा माहिषका दर्वा श्चोला सकेरला । सर्वे ते क्षत्रिया स्तात-धर्म स्तेषां निराकृत. ॥ इतिहरिवंश ॥ सम्प्रदाय विशेषे ॥ ग्रन्थग्रन्थविशेषे ॥

केरली । स्त्री । ज्योतिर्ग्रन्थविशेषे ॥

होरायाम् ॥

केलक । पु । खड्गधारादिनर्त्तके । प्लवके ॥

केलास: । पु । स्फटिके ॥

केलि. । पु । स्त्री । परीहासे । द्रवे । क्रीडायाम् ॥ केलनम् । किलक्रीडायाम् । केलृचलनेवा । इन् ॥ स्त्री । पृथिव्याम् ॥

केलिक: । पु । अशोकवृक्षे ॥

केलिकला । स्त्री । सरस्वत्यावीणायाम् ॥

केलिकाल. । पुं । क्रीडासमये ॥

केलिकिल. । पु । कूष्माण्डकसंज्ञकेशिवस्यानुचरे ॥ नाट्ये नायकवयस्ये । विदूषके । वैहासिके ॥

केलिकिला । स्त्री । कामदेवपत्न्याम् । रतौ ॥

केलिकिलावती । स्त्री । स्मरभार्यायाम् ॥

केलिकीर्ण' । पु । उष्ट्रे ॥

केलिकुञ्चिका । स्त्री । पत्नीभगिन्याम् । श्यालिकायाम् । साली इति भाषा ॥

केलिकोष' । पु । नटे ॥

केलिनागर । पु । बहुभोगिनि । भोगवति ॥

केलिमुख' । पु । परीहासे ॥

केलिवृक्ष: । पु । केलिकदम्ब इतिगौ

इभाषाप्रसिद्धे कदम्बविशेषे ॥

केलिशुषिः । स्त्री । धरित्र्याम् ॥

केलिसचिव । पु । क्रीडाविषयकमन्त्रिणि । नर्मदे । नर्मसचिवे ॥

केवर्त्त । पुं । कैवर्त्तजातौ ॥ इतिद्विरू० ॥

केवल । पु । कुहने ॥ न । ज्ञानभेदे ॥ शुद्धे ॥ निर्णीते ॥ त्रि । अद्वितीये । एकस्मिन् । असहाये ॥ कृत्स्ने ॥ केवते । केवसेवने । इषा० कल ॥ केशिरसि वलयति वा । वलप्राणने । पचाद्यच् ॥

केवलज्ञानी । पुं । भूतार्हद्विशेषे ॥

केवलद्रव्यम् । न । मरिचे ॥

केवलव्यतिरेकि । न । व्यतिरेकमात्रव्याप्तिकानुमाने ॥ यथा । पृथिवी इतरेभ्योभिद्यते गन्धवत्त्वात् यदितरेभ्यो न भिद्यते न तद् गन्धवत् यथा जलम् नचेयं तथा तस्मात् तथेति । अत्र यद्गन्धवत् तदितरभिन्न मित्यन्वयदृष्टान्तो नास्ति पृथिवीमात्रस्य पक्षत्वात् ॥

केवला । स्त्री । एकस्याम् ॥ कृत्स्नायाम् ॥ केवलात् टाप् ॥

केवलान्वयि । न । अन्वयमात्रव्याप्तिकानुमाने ॥ यथा । घटः इमिधेयः प्रमेयत्वात् पटवत् इत्यत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्ति र्नास्ति सर्वस्याप्यभिधेयत्वात् प्रमेयत्वाच्च ॥

केवली । पु । जैनविशेषे ॥

केवली । स्त्री । ज्ञानविशेषे ॥ ग्रन्थविशेषे ॥ केवलमा मकेति संज्ञाछन्दसो ङीप् ॥

केविका । स्त्री । केवेर इतिकोकणभाषाप्रसिद्धे पुष्पविशेषे । भृङ्गारौ । महागन्धायाम् ॥

केश । पु । वरुणे ॥ ह्रीबेरे ॥ दैत्यवि० ॥ विष्णौ ॥ चिकुरे । कुन्तले । वासे ॥ मज्जजातोपधातुविशेषोयम् ॥ केशसमूहार्थवाचका शब्दाः यथा । पाशः स्तु हस्तः परः पाशोरचनाभारउच्चयः । हस्त पक्ष कलापस्य केशभूयस्त्ववाचका इतिहेमचन्द्र. ॥ क्लिश्यते । क्लिश वन्धे क्लिशु उपतापे वा । क्लिश्नातिवा । क्लिशूविबाधायाम् । क्लिशेरन्लोलोपश्च ॥ केशेते । शीङ्० । अन्येभ्योपीतिड । हलदन्तात्सप्तम्यासंज्ञायाम् ॥ कस्यशिरस. ईशोवा ॥

केशकः । पु । केशेषु प्रसिते ॥ स्वाङ्गेभ्यः प्रसिते इतिकन् ॥

केशकलापः । पु । केशपाशे । केशसमूहे ॥

केशकारः । पुं । कारिया कुशियार इतिभाषा प्रसिद्धे इक्षुप्रभेदे ॥ केशकारे ।

गुरु शीतो रक्तपित्तत्रयापहः ॥

केशकीट । पु । यूकायाम् ॥

केशगर्भ । पु । } कबर्य्याम् ॥
केशगर्भक । पु । }

केशघ्नम् । न । इन्द्रलुप्तके ॥

केशट । पु । हरौ । विष्णौ ॥ अजे । छागे ॥ उत्कटे ॥ भ्रातरि ॥ शोष याख्ये मदनस्य वाणे ॥ शोणकवृक्षे ॥

केशधृत् । पु । भूतकेशे ॥

केशनाम । न । वाले । ह्रीवेरे । वाला इतिभाषा ॥

केशपक्ष । पु । कचौघे । केशकलापे ॥

केशपर्णी । स्त्री । अपामार्गे ॥

केशपाश । पु । केशपक्षे ॥ पाशः पक्ष श्च हस्तश्च कलापार्थाः कचात् परे ॥

केशपाशी । स्त्री । शिखायाम् । शिरोमध्यस्थचूडायाम् ॥ केशानांपाश । गौरादिः ॥

केशभू । पु । शिरसि ॥

केशमथनी । स्त्री । शमीवृक्षे ॥

केशमार्जकम् । न । कङ्कतिकायाम् । कङ्घा कङ्घी इतिचभाषा ॥

केशमार्जनम् । न । कङ्कतिकायाम् ॥

केशमुष्टि । पु । विषमुष्टिवृक्षे ॥ महानिम्बे ॥

केशर । पु । सिंहस्कन्धजटायाम् ॥ तुरङ्गस्कन्धकेशेषु ॥ पुन्नागवृक्षे ॥ ब कुलवृक्षे ॥ नागकेशरवृक्षे ॥ सुरागन्धे ॥ न । हिङ्गुनि ॥ पु । न । किञ्जल्के ॥ के जले शीर्यते । शॄहिंसायाम् । ऋदोरप् । हलदन्तादित्यलुक् ॥

केशरञ्जन । पु । भृङ्गराजवृक्षे ॥

केशराज । पु । नागमारे । भृङ्गराजे । भंगरा इतिभाषा ॥

केशराम्ल । पु । मातुलुङ्गकवृक्षे ॥

केशरी । पु । सिंहे ॥ तुरगे ॥ केशराः स्कन्धवालाः सन्त्यस्य । इनि ॥ बीजपूरकवृक्षे ॥ पुन्नागे ॥ नागकेसरे ॥

केशवक्षा । स्त्री । भद्रदन्तिकावृक्षे ॥

केशरुमा । स्त्री । वन्दाकवृक्षे ॥

केशवः । पु । पुन्नागवृक्षे ॥ वासुदेवे । विष्णौ ॥ केशौ ब्रह्मरुद्रौ सर्वेश्वरावपि अनुकम्प्यतया वात्येव गच्छतीति व्युत्पत्ति माश्रित्य निरतिशयैश्वर्यप्रतिपादनात् सर्वेश्वरे ॥ कश्च ईशश्च केशौ पुनशौ प्रशस्तोऽस्य । केशाद्व इति व । केशौवातिवा । वा गतौ । आतइतिक । शम्भो पितामहो ब्रह्मपिता शक्ताशधीश्वर इति प्रमोक्तं ॥ यद्वा । केशिनं हिंसाविशेषं वाति गच्छति मारयति वा ते गमनार्थादन्येभ्योपिदृश्यते

इति ड' । पृषोदरादित्वात् इकार स्याकार । यस्मात् त्वयैष दुष्टात्मा हत. केशी जनार्दन । तस्मात् केशवनाम्ना त्वं लोकेख्यातो भविष्यसीति हरिव शोक्ते ॥ यद्वा । केश सञ्ज्ञिता । सूर्यादि सङ्क्रान्ता अंशव तद्वत्तया केशव । अंशवो ये प्रकाशन्ते ममते केशसञ्ज्ञिता । सर्वज्ञा. केशवं तस्मात् प्राहु र्मां द्विजसत्तमा. ॥ इतिभारतम् ॥ ब्रह्मविष्णुशिवाख्या. शक्तय केशसञ्ज्ञिता तद्वत्तया वा । तव' केशिन इति श्रुते' ॥ कश्च अश्च ईशश्च केशा ब्रह्मविष्णुरुद्रा. ते अस्य वश्यतया सन्तीति केशव. । केशशब्दा न्मत्वर्थीय केशाद्वोन्यतरस्यामिति वप्रत्यय' ॥ यद्वा । केशान् ब्रह्मविष्णुरुद्रान् वष्टि इच्छति सर्गादिकार्यायेति । वशकान्तौ । अन्येभ्योपिदृश्यतइतिडप्रत्यय ॥ यद्वा । केशान् ब्रह्मविष्णुरुद्रान् वाति गच्छति नियामकत्वेनेति केशव । वागतिगन्धनयो. । आतो ऽनुपसर्गेइति क. ॥ को ब्रह्मेति समाख्यात ईशोहं सर्वदेहिनाम् । आवां तवांशसम्भूतौ तस्मात् केशवनामवान् ॥ इति ह° वं ॥ त्रि । प्रशस्तकेशवति ॥ प्रशस्ता: केशा: सन्त्यस्य । प्रशंसायाम् केशाद्वोन्यतरस्यामितिव ॥

केशवान् । त्रि । केशिके ॥ केशा सन्त्यस्य । मतुप् ॥

केशवर्द्धिनी । स्त्री । सहदेवीलतायाम् ॥

केशवायुध । पु । आम्रवृक्षे ॥ न । विष्णोरस्त्रे ॥

केशवालय । पु । अश्वत्थवृक्षे ॥ विष्णोर्मन्दिरे ॥ केशवस्य आलय ॥

केशवावास । पु । अश्वत्थद्रुमे ॥

केशवेश । पु । कवर्याम् ॥ केशानांवेश मार्जनाबन्धनादिनाकृतशोभाविशेष ॥

केशहन्तृफला । स्त्री । शमीवृक्षे ॥

केशहन्त्री । स्त्री । सक्तुफलायाम् । शमीवृक्षे ॥

केशहस्त । पु । केशसमूहे ॥

केशाकेशि । अ । केशेषु केशेषु गृहीत्वा प्रवृत्ते युद्धे ॥ तत्रतेनेदमिति सरूपे इति कर्मव्यतिहारे बहुव्रीहि: । अन्येषामपिदृश्यते इति पूर्वपदान्तस्यदीर्घः । इच्कर्मव्यतिहारे इति इच्समासान्त । तिष्ठद्गुप्रभृतिषु इच्प्रत्ययस्य पाठादव्ययीभावत्व मव्ययत्व च ॥

केशान्त: । पु । गृह्योक्ते संस्कारविशेषे ॥ ब्राह्मणादीनां षोडशादिवर्षेषु कर्तव्ये गोदानाख्यसंस्कारे ॥ [illegible]

मनु । केशान्त षोडशे वर्षे ब्राह्मणस्य विधीयते । राजन्यबन्धोर्द्वाविंशे वैश्यस्यद्व्यधिकेततः इति ॥

केशाबहा । स्त्री । सहदेव्याम् ॥

केशार्हा । स्त्री । महानील्याम् ॥

केशिक । त्रि । प्रशस्तकेशविशिष्टे । केशिनि ॥ प्रशस्ता केशा सन्त्यस्य । केशाद्वोन्यतरस्यामितिपक्षे ठन् ।

केशिका । स्त्री । शतावर्याम् ॥

केशी । पु । विष्णौ ॥ दैत्यविशेषे ॥ सिंहे ॥ त्रि । केशिके ॥ ठनोऽभाव पक्षे इनि ॥

केशिनिसूदन । पु । श्रीकृष्णे ॥

केशिनी । स्त्री । सांख्याहुली इति ख्यातायाचोरपुष्प्याम् ॥ रावणस्यमातरि ॥ जटामांस्याम् ॥ प्रशस्तकेशवत्याम् ॥ इन्नन्तात् ङीप् ॥

केशिसूदन । पु । श्रीकृष्णे ॥ केशिनामानमसुरं सूदितवान् सूदयति वा सूदक्षरणे । नं० ल्यु ॥

केशिहा । पु । केशवे । श्रीकृष्णे ॥ केशिनामानमसुरं हन्ति हतवान्वा । हन्० क्विप् ॥

केशी । स्त्री । नील्याम् ॥ भूतकेश्याम् ॥ अजलोमा वृक्षे ॥

केशोच्चय । पु । केशपाशे ॥

केश्यम् । न । कृष्णागुरुणि ॥ भृङ्गराजे ॥

केसर । पु । सिंहस्कन्धजटायाम् । सिंहच्छटायाम् ॥ तुरगस्कन्धकेशेषु ॥ पुन्नागतरौ ॥ वकुलवृक्षे ॥ नागकेसरद्रुमे ॥ न । हिङ्गुनि ॥ नागकेसरपुष्पे ॥ कासीसे ॥ स्वर्णे ॥ पुं । न । किञ्जल्के ॥ रभसस्तु हिङ्गुनि द्वयोरित्याह ॥ केजले सरति । सृगतौ । पचाद्यच् । हलदन्तादित्यलुक । प्रशस्ता केसरा अस्य । अर्श आद्यच्वा ॥

केसरवरम् । न । कुङ्कुमे ॥

केसराम्ल । पु । बीजपूरे ॥

केसरिका । स्त्री । सहदेवीलतायाम् ॥

केसरी । पु । तुरगे ॥ सिंहे ॥ पुन्नागे ॥ नागकेसरे ॥ रक्तशिग्रौ ॥ बीजपूरे ॥ वानराणां यूथपते विशेषे । हनूमत पितरि ॥ केसरा' स्कन्धबाला. सन्त्यस्य । अतइनिः ॥

केसरिसुत' । पुं । हनूमति ॥ इतिहेमचन्द्र' ॥

कैकय. । पु । दैत्यविशेषे । ब्रह्मपुत्रात्कामरूपा ब्धभागे तु कैकयः ॥

कैकेय. । पु । अश्वपतिन्दृपे ॥ केकयस्याऽपत्यम् । जनपदशब्दात् क्षत्रियादञ् । केकयमित्रयुप्रलयानां यादेरिय इति इयादेश. । वृद्धिः ॥

कैकेयी । स्त्री । भरतमातरि ॥ केक

यस्यापत्यं स्त्री । जनपदशब्दादित्य पञ्प्रत्ययः । अतश्चेति तद्राजस्याकारस्य लुक् तुन । नप्राच्यभर्गादियौधेयादिभ्य इति प्रतिषेधात् । पूर्ववत्या देरित्यादेशः । अदन्तत्वात् ङीप् ॥

कैङ्कर्य्यम् । न । किङ्करत्वे । दासत्वे ॥

कैटज । पु । कुटजवृक्षे ॥

कैटभः । पु । दैत्यविशेषे ॥

कैटभजित् । पु । विष्णौ ॥ कैटभ असुरविशेष मजैषीत् । जिजये । सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् इति क्विप् ॥

कैटभहा । पु । विष्णौ ॥

कैटभा । स्त्री । दुर्गायाम् ॥

कैटभारिः । पुं । विष्णौ ॥

कैटभी । स्त्री । कात्यायन्याम् ॥

कैटभेश्वरी । स्त्री । दुर्गायाम् ॥ तथा च देवीपुराणम् । कैटभस्तु यथा कृत्वा गृहीता तत् पुरीयथा । तेन सा गीयते देवी पुराणे कैटभेश्वरीति ॥

कैटर्य्य । पु । कट्फले । पूतिकरञ्जे । कायफल इति भाषा ॥ मदनवृक्षे ॥ केटनम् । किटचासे । घञ् । केटं राति अतितिक्तत्वात् । रा० । आ

तदस्तिकः । चतु० घ्यञ् ॥ निम्बे ॥ महानिम्बे ॥

कैडर्य्य । पु । कट्फले ॥ कटभीवृक्षे ॥

कैतकम् । न । केतकीपुष्पे ॥ केवडाभिधेगन्धजले ॥ त्रि । केतकी सम्बन्धिनि ॥

कैतवम् । न । कपटे ॥ द्यूते ॥ वैदूर्य्यमणौ ॥ धस्तूरफलपुष्पादौ ॥ स्वलतायाम् ॥ कितवस्य कर्म्म । यु० अण् ॥

कैदार । पुं । शालिधान्ये ॥ न । क्षेत्रसमूहे ॥ केदारजले ॥ केदारं क्षेत्र मुद्दिष्ट कैदारं तज्जलं स्मृतम् । कैदारं वातभिष्यन्दि मधुरं गुरुदोषकृत् ॥ केदारस्येदम् । अण् ॥

कैदारकम् । न । केदारसमूहे । क्षेत्रे ॥ केदाराणांसमूहः । केदाराद्यञ्चेति वुञ् ॥

कैदारिकम् । न । कैदारके ॥ केदाराणांसमूहः । ठञ् कवचिनश्च । चात्केदारादपि ॥

कैदार्य्यम् । न । क्षेत्रे । कैदारिके ॥ केदाराणां समूहः । केदाराद्यञ्चेति यञ् ॥

कैरवः । पु । कितवे ॥ रिपौ ॥ न । कुमुदे । शुक्लोत्पले ॥ के जले रौति । कमले । पचाद्यच् । तत्पुरुषेकृतीत्यलुक् । कैरवस्य हंसस्येदंप्रिय

म् । तस्येदमित्यण् ॥

कैरविणी । स्त्री । कुमुदिन्याम् । कुमुद्युक्तपुष्करिण्यादौ ॥ कैरवाणिसन्त्यस्याम् । पु०इनिः ॥

कैरविणीखण्डम् । न । कैरविणीनां समूहे ॥ कमलादिभ्यःखण्डः ॥

कैरविणीफलम् । न । वेरा इतिप्रसिद्धे कुमुदबीजे ॥

कैरवी । पुं । चन्द्रे ॥

कैरवी । स्त्री । चन्द्रिकायाम् ॥ मेथिकायाम् ॥

कैराटः । पुं । }
कैराटकः । पु । } स्थावरविषविशेषे ॥

कैरातः । पु । बलवत्पुरुषे । दीर्घ्रहे ॥ न । शम्बरचन्दने ॥ पु । न । भूनिम्बे ॥

कैरावम् । न । विडङ्गे ॥

कैरावी । स्त्री । विडङ्गायाम् ॥

कैलासः । पु । शिवकुवेरयोः स्थाने । कुवेराचले । गणपर्वते ॥ केजले लासो लसनं मस्य केलासः स्फटिकः । इलादमादित्वलुक् । तस्यायम् । कैलासः । अण् ॥ यद्वा । केलीनां समूहः कैलम् । तस्यसमूहइत्यण् । तेनास्यतेऽत्र । आसउपवेशने । ह लर्थोतिघञ् ॥ आश्रयाद्दूरे ॥ कैलासात्पतदूर्ध्वं तु वोधिनीमुतदूर्ध्वत

इत्युक्ते ॥

कैलासनिकेतनः । पुं । शिवे । पार्वतीपतौ ॥

कैलासौकाः । पुं । कुवेरे ॥ शिवे ॥

कैवर्त्तः । पु । धीवर इतिप्रसिद्धे वेश्यागर्भे क्षत्रियेरसजाते । धीवरे । दासे । जालिके ॥ के जले वर्त्तन्ते । इत्तु० । पचाद्यच् । केवर्त्तानां मत्स्यानामयं घातकः । तस्येदमित्यण् ॥

कैवर्त्तमुस्तम् । न । }
कैवर्त्तमुस्तकम् । न । } कैवर्त्तीमुस्तके । कुटन्नटे ॥

कैवर्त्तिका । स्त्री । मालवप्रसिद्धेलताविशेषे । वल्लरञ्जायाम् । सुरञ्जायाम् । सुभगायाम् ॥

कैवर्त्तिमुस्तकम् । न । कैवर्त्तीमुस्तके ॥

कैवर्त्ती । स्त्री । परिपेलवे ॥ कैवर्त्तभार्यायाम् ॥

कैवर्त्तीमुस्तकम् । न । कुटन्नटे । वानेये । परिपेलवे । मोथा इतिभाषा ॥ इदन्तु वितुन्नकनाम्नो दृषस्य मुस्ताकृतिस्त्वगिति भावप्रकाशः ॥ कैवर्त्तानां जातिः कैवर्त्ती । कैवर्त्त्या मुस्तकम् ॥

कैवल्यम् । न । निर्वाणे । अत्यन्तदुःखत्रयप्रशमनलक्षणायाम् मुक्तौ ॥ आत्यन्तिकोहि दुःखत्रयाभावः कैवल्यम् । तच्च पुरुषस्य स्वाभाविक

कोकिलोत्सवः । पु । आम्रवृक्षे ॥

कोङ्क । पु । देशविशेषे ॥

कोङ्कण । पु । कोंकन इति प्रसिद्धे देशे ॥ अथाभ्यङ्गं समारभ्य कोटिदेशस्य मध्यगे। समुद्रप्रान्तदेशोऽपि कोङ्कण परिकीर्त्तितः ॥ न । शस्त्रभेदे ॥

कोङ्कणासुत । पु । परशुरामे ॥

कोच. । पु । सङ्करजातिविशेषे ॥ स तु मालच्छेदिगर्भे तीवरक्षोरसजातः । इतिब्रह्मवैवर्त्तपुराणम् ॥

कोजागर । पु । आश्विनपौर्णमास्याम् । द्यूतपूर्णिमायाम् । कौमुद्याम् ॥

कोट । पु । दुर्गे । कुटे । गढ इति भाषा ॥ कुटनम् । कुट० । भावे घञ् ॥

कोटक. । पु । घरामि राज इति भाषा प्रसिद्धे गृहकारके ॥ सतु कुम्भकार्यां गर्भे अट्टालिकाकारस्यौरसजात ॥ इति ब्रह्मवैवर्त्तपुराणम्॥

कोटर । पुं । न । वृक्षस्थितगह्वरे । निष्कुहे ॥ कोटरातिि । रा० । आत इतिक. ॥

कोटवी । स्त्री । चण्डिकायाम् । दुर्गायाम् ॥ नग्निकाम् । विवसनायांस्त्रियाम् ॥ कोटं याति । या० । आतो नुपेतिक ॥ गौ० ङीष् ॥

कोटिः । स्त्री । धनुषोऽग्रभागे ॥ अस्त्रादेरग्रभागे ॥ परीक्षकपरिकल्पितनिर्णयनिरूपणीये । प्रावादुकप्राप्तनिर्णयाप्ते ॥ उत्कर्षे । प्रकर्षे ॥ दशप्रयुते । शतलक्षसङ्ख्यायाम् । १०००००० ॥ पिडङ्गशाक इति गौड प्रसिद्ध शाके । पृक्कायाम् ॥ कूटयते ऽनया वा । कूट अप्रदाने । चु० । अचङ् ॥ कोटयति कोट्यते वा । कुटकौटिल्ये । इ. ॥ कुट्यते वा । इनजादिभ्यइतीञ् । सर्वधातुभ्यइतीन् वा । का० गुण ॥

कोटिक । पु । शक्रगोपकीटे ॥

कोटिजित् । पु । कालिदासे । मेघादूते ॥

कोटिपात्र । पुं । केनिपातके । अरित्रे इति हेमचन्द्र. ॥

कोटिर । पु । नकुले ॥ शक्रे । इन्द्रे ॥ इन्द्रगोपकीटे ॥

कोटिवर्षम् । न । बाणासुरपुरे ॥

कोटिवर्षा । स्त्री । पिडिङ्गशाक इति गौडप्रसिद्ध पृक्कायाम् । कासारक इतिभाषा ॥ कोटिभिरग्रैर्वर्षति । म धु । वृष सेचने । अच् ॥

कोटिशः । पु । लोष्टभेदने । हेंगा इति भाषा ॥ कोटिना अग्रेण श्यति । शो तनूकरणे । सुपीतिक ॥ कोटिर

स्यान्नीति वा । लोमादित्वात् श. ॥

कोटिशः । अ । कोटीकोटी ॥

कोटीर । पु । किरीटे ॥ जटायाम् ।

कोटीवर्षम् । न । वाणासुरपुरे ॥

कोटीश. । पु । कोटिशे ॥

कोट्टः । पु । पुरस्य दुर्गे । राजधान्याम् ॥ न । दुर्गे । किल्ला गढ इतिभाषा ॥ कुट्टच्छेदनभर्त्सनयोः घञ् ॥

कोट्टवी । स्त्री । मुक्तकेश्याम् नग्नायां स्त्रियि ॥ वाससा मुक्तकेशी कोट्टवीनग्निकायश्चेतिजटाधर. ॥ दुर्गायाम् ॥ वाणासुरमातरि ॥ कुट्टनम् । कुट्ट° । घञ् । वा० गुणाभाव. । कोट्टंवाति । वा०। आत इति कः । गौरादित्वात् ङीष् ॥

कोट्टवीपुरम् । न । वाणासुरपुरे ॥ कोट्टव्या'पुरम् ॥

कोट्टारः । पु । नागरे ॥ कूपे ॥ पुष्करिण्या पाटके ॥ कुट्यते । कुट्टच्छेदने प्रतापनेवा । वा° आरन् गुणश्च ॥

कोठ. । पुं । चक्राकारे कुष्ठरोगे । मण्डलके । त्वग्दोषे ॥ अस्य लक्षणम् । असम्यग्वमनोदीर्णपित्तश्लेष्मविनिग्रहैः । मण्डलानि सकण्डूनि रागवन्ति बहूनि च ॥ उत्कोठः सानुबन्धश्च कोठ इत्यभिधीयतेइति ॥ अन्यच्च । वरटीदष्टनिकाशः कण्डूमान् लोहितोऽस्रकफपित्तात् । क्षणिकोत्पादविनाश कोठ इति निगद्यते तज्ज्ञैरिति ॥ कुण्ठति । कुठिप्रतिघाते । अच् । आगमशास्त्रस्यानित्य त्वान्ननुम् ॥

कोठर' । पु । अङ्कोठवृक्षे ॥

कोठरपुष्पी । स्त्री । वृद्धदारके ॥

कोणः । पु । वाद्यप्रभेदे ॥ वीणादीनां वादने । येन धनुषाकृतिना वीणादिर्वाद्यते तस्मिन् । नेपालभाषया गज्जा इति ख्याते वाद्यवादनकाष्ठे। बाजानेकीलकडी इति भाषा ॥ गृहादीनामेकदेशे । कूना इतिभाषा ॥ अश्रौ । अस्त्रादीनामग्रभागे । पाल्याम् ॥ लगुडे ॥ मङ्गलग्रहे । शैौ मे ॥ द्वयोर्दिशोर्मध्यभागे । विदिशि ॥ लग्नान्नवमपञ्चमयोः ॥ शनौ ॥ कुण्यते ऽनेन । कुणशब्दोपकरणयोः । हलश्चेति घञ् । कुणध्वने मवा । कर्त्तर्य्यप् ॥

कोणकुणः । पुं । उत्कुणे । उद्दंशे । उडुस खटमल मङ्कुण इत्यादिभाषाप्रसिद्धे मत्कुणे

कोथ. । पु । कथो इति गौड भाषा प्रसिद्धे नेत्ररोग विशेषे ॥ त्रि । मथिते ॥ शटिते ॥ यथा । मांसकोथः मांसगलनमिति ॥

कोदण्डः । पुं । भ्रुवि । भ्रूलतायाम् ॥ न । चापे । धनुषि ॥ पु । न । नी वृद्विशेषे ॥ कोटति । कुटमन्तलभा षणे । बा॰ अण्डन् । पृषोदरादि ॥ कौतेर्विच् । कोर्दण्डोऽस्यवा ॥

कोद्रव. । पु । धान्यप्रभेदे । कोरदूषे । कोदा इति भाषा ॥ कोद्रवो वात लो । ग्राही हिम पित्तकफापह ॥ कौतिकवतेवा । कुशब्दे कुङ्शब्दे वा । विच् । द्रवति । द्रुगतौ । अच् । कोश्चाऽसौ द्रवश्च ॥ केन वायुना द्रवतीति वा । पृ॰ ॥

कोप. । पु । क्रोधे ॥ मल्लनिवृत्तेरुपाय स्तत्त्व शास्त्रे । यथा । अपकारिणि चेत् कोप कोप कोपेकथ न हि । ध र्मार्थकाममोक्षाणां प्रसह्य परिपन्थि नीति ॥ अपिच । रिपौबन्धौ स्वदेहे च समैकात्म्य प्रपश्यत । विवेकिन कुत कोप स्वदेहावयवेष्विवेति ॥ कोपनम् । कुपक्रोधे । घञ् ॥

कोपन. । त्रि । कोपविशिष्टे । क्रोधिनि ॥ कुप्यति तच्छील । क्रुधमण्डार्थे भ्यश्चेतियुच् ॥

कोपलक. । पु । चोरनामगन्धद्रव्ये ॥

कोपना । स्त्री । कोपवत्यांस्त्रियाम् । भामिन्याम् ॥ कुप्यतितच्छीला । युजन्ताट्टाप् ॥



कोपलता । स्त्री । कर्णस्फोटायांलता याम् । चित्रपर्ण्याम् । चिपुटायाम् ॥

कोपित. । त्रि । कोपम्मापिते । सञ्जा तकोपे ॥ ता॰ इतच् ॥

कोपी । पु । जलपारावते ॥ त्रि । क्रोधने ॥ अवश्यङ् कुप्यति । कुप क्रोधे । आवश्यकेतिणिनि ॥

कोपोपाय । पु । दण्डे ॥ कोपजन्यउ पाय ॥

कोमलम् । न । जले ॥ त्रि । अकठिने । मृदौ । मृदुले ॥ मनोज्ञे ॥ का म्यबे । कमुकान्तौ । बा॰ अलच् । अ तउत्त्वम् ॥ कौतिवा । कुशब्दे । ह षा॰ कल' तस्यमुट् । वा॰गुण ॥

कोमलकम् । न । कोमलार्थे ॥ मृणाले ॥

कोमलवल्कली । स्त्री । लवल्याम् ॥

कोमला । स्त्री । क्षीरिकायाम् ॥ वृ त्त्यनुप्रासघटकवृत्तिभेदे ॥

कोमासिका । स्त्री । जालिकायाम् । फलकीजाली इतिभाषा ॥

कोयष्टि' । पु । जलकुक्कुभे खगे ॥ कं जल यष्टिरिवास्य । पृ॰ ॥

कोयष्टिक । पु । कोंडापाखी इतिगौ डभाषप्रसिद्धे टिट्टिभखगे ॥ स्वार्थे कन् ॥

कोरक । पु । न । कलिकायाम् । कु ड्मले ॥ विकारकोरकावीतिमाघ

। कोरकोऽस्त्री कुड्मले स्यात् कक्कोल-
कमृणालयोरिति मेदिनिकरः। को-
रकन्तु कुड्मलेस्यादिति हेमोऽस्त्रेका-
र्थे। तथाच कलिकाकोरकः पुमा-
निव्यमरस्य प्रमादः। प्रायिकाभि-
प्रायो वा ॥ कक्कोलके ॥ मृणाले ॥
चोरनामगन्धद्रव्ये ॥ कुर्यते। कुर
शब्देतारे। कृ॰वुन् ॥ यद्वा। कोरा
ति। कुरसंस्थाने। ण्वुल्। रलयो
रैक्यम् ॥

कोरङ्गी। स्त्री। सूक्ष्मैलायाम् ॥ पि
प्पल्याम् ॥ कुरति। कुर॰। बाहु
लकादङ्गच्। गौरादि ङीष् ॥

कोरदूष। पु। कोद्रवे ॥ कोर दूषय
ति। दूषवैकृत्ये। णयन्त'। कर्म
ण्यण् ॥

कोल। पु। अङ्कपाल्याम् ॥ शनौ ॥
चित्रे। चीता इतिभाषा ॥ वराहे।
शूकरे ॥ उत्सङ्गे। क्रोडे। भुजान्त
रे ॥ कोंगा केंगी इतिच भाषाप्रसि
द्धे। प्लवे। भेलके। अल्पनौकाया
म्। उडुपे ॥ अस्त्रविशेषे। टङ्कद्व
यमाने ॥ वर्णसङ्करजातिविशेषे। स
तु लेटात् तीवरकन्यायां जातः।
इति ब्रह्मवैवर्त्तपुराणम् ॥ म्लेच्छधारि
णि म्लेच्छजातिविशेषे ॥ सच पूर्वं
क्षत्रिय आसीत् सगरेणास्य वेद

ग्रामाद्याख्यानविषयीकृतः ॥ [illegible]
चायुधः ॥ देशविशेषे ॥ न। चव्ये ॥
मरिचे ॥ तोलकपरिमाणे ॥ बदरे
। कोलफले ॥ कोल्याः फलम्। अ
णु लुकौ। लुक् तद्धितलुकीतिङी
षोलुक् ॥ सौवीरास्त्रषु सम्पक्कं म
धुर कोलमुच्यते। कोलन्तु बदरं
ग्राहि रुच्य मुष्णञ्च वातहृत्। कफ
पित्तकर ञ्चापि गुरु सारक मीरित
म् ॥ कोलति। कुलसंस्त्याने। ज्व
लितीतिणः ॥ यद्वा। कोलतिपौन
स्त्यात्। अच् ॥ यद्वा। कोलन्यङ्गा
न्यत्र। हलश्चेतिघञ् ॥

कोलकः। पु। अङ्कोठवृक्षे ॥ बकुलतर
वृक्षे ॥ न। काँकला इतिगौडभा
षाप्रसिद्धे गन्धद्रव्यविशेषे। कक्कोले
॥ मरिचे ॥ कोलति। कुल॰। ण्वु
ल्। कृञादिभ्यो वुन्वा ॥

कोलकन्दः। पु। महाकन्दविशेषे। [illegible]
[illegible]। पुटकन्दे ॥

कोलकर्कटिका। स्त्री। मधुखर्ज्जूरिका-
याम् ॥

कोलदलम्। न। नखीनामगन्धद्रव्ये
॥ कोलस्य बदर्या इव दलम् ॥

कोलनासिका। स्त्री। वृश्चिकालीवृक्षे ॥

कोलपुच्छः। पुं। कङ्कपक्षिणि ॥

कोलमूलम्। न। पिप्पलीमूले ॥

कोलम्बक । पु । वीणाय काये । तन्त्रीहीने अलावूदण्डककुभसमुदाये ॥ कोलति । कुल० । बाहुलकाद म्बच् । तत संज्ञायां कन् । ओष्ठ्य मध्य ॥

कोलवल्ली । स्त्री । वशिरे । करिपिप्पल्याम् । कोलइववल्ली तत्तुल्यरोमत्वात् ॥

कोलवालुकम् । न । कक्कुष्ठे ॥

कोलशिम्बि: । स्त्री । कालकुशीति गौडभाषाप्रसिद्धे लताविशेषे । शूकरपादिकायाम् । कोलशिम्बि समीरघ्नीगुर्व्युष्णा कफपित्तकृत् । शुक्राग्निसादकृद्रुक्षा रुचिकृद्बद्धविट्गुरु ॥

कोला । स्त्री । पिप्पल्याम् ॥ चव्यभेषजे ॥ कोलिद्रुमे ॥ सुरथस्य राजधान्यन्तरे ॥ अस्त्रविशेषे ॥ कोलति । कुल० । ज्वलितीतिणा । पचाद्यच् । टाप् ॥

कोलाख. । पु । देशविशेषे ॥

कोलापुरम् । न । दक्षिणदेशप्रसिद्धे लक्ष्मीदेव्या स्थानविशेषे ॥

कोलाविध्वंसी । पु । कोलावासिनि ॥ कोलां विध्वंसितु शीलमस्य । विध्वंसेन धातो रन्यार्थं करणम् ॥ पर्वतवासिनिम्लेच्छ विशेषे ॥ एवंचायतत्सम्लेच्छा पर्वतवासिन । कोलाविध्वंसिन प्रागुक्ता. पृथ्वीग्रहणतत्परा इति देवीभागवतोक्ते । अत्र नामैकदेशेनामग्रहणमितिन्यायात् कोलाशब्द' कोलाहल वाचक । तथाचकोलाहलेनान्यायेनैव मधुराज्यविध्वंसनशीला. नतुयुद्धनीत्यवलम्बिनइत्यर्थइति भागवत व्याख्यानेनीलकण्ठश्चैव ॥ यद्वा । कोलां काश्चित् सुरथस्य राजधानीं विध्वंसितु सुपमर्दितु शीलमस्य णिनि. ॥

कोलाहल । पु । कलकले । बहुविध दूरगाव्यक्तध्वनौ ॥ कुल० । कोलन कोल' एकीभावः तमाहलति । हल विलेखने । अच् ॥ गिरिवि० ॥

कोलि । पु । स्त्री बदर्याम् ॥ कोलति । कुल० । इन् ॥

कोली । स्त्री । बदर्याम् । बेर इति प्रसिद्धे वृक्षे ॥ कोलति घनीभवति । कुल० । अच् । गौ० ङीष् ॥

कोविद. । पु । धीरे । पण्डिते । विदुषि ॥ विवेकिनि ॥ कौति धर्मादि । कुशब्दे । कवते वा । कुङ् शब्दे । विच् । गुण । कोर्वेदस्य विदो वेत्ता । इगुपधेतिक ॥ कवि वेदे विदा यस्य वा ॥

कोविदार । पु । रक्तकाञ्चनारे । चमरिके । कचनार इति भाषा ॥ को

विदारकलिकातिकोमला तक्रसिद्ध तिलतैलपाचिता । हिङ्गुवासजम्बु वासवासिता वेसवारखचिताऽति लोभदा ॥ काञ्चनारं कषायःस्या द्रुष्मं शीतलरो लघु । रूक्षः पि त्तास्रकृत् मदरसयोशियसमुत् ॥ कुम् भूमिं विदृणाति । दॄ विदारणे । कर्मण्यण् । पृषोदरादि. ॥

कोशः । पु । न । कुड्मले ॥ चषके । पानपात्रे ॥ दिव्ये ॥ खड्गपिधाने ॥ जातिकोषे । जायफल इति भाषा ॥ अर्थसङ्घाते । अर्थचये ॥ पेश्याम् । अण्डे ॥ अण्डकोषे ॥ शब्दादिसङ्ग्रहे ॥ योनौ ॥ शिम्बायाम् ॥ गोपनगृहे । गुप्तिस्थाने ॥ हिरण्यादिनिः क्षेपाधारे । मञ्जूषायाम् ॥ आच्छादके ॥ अन्नमयप्राणमयमनोमयवि ज्ञानमयानन्दमयेष्वात्मनः शरीरे षु ॥ पनसादिफलस्यान्तःस्थावय वे । कोया इति भाषा ॥ शब्दान्तर संयोगे शोषकशब्द कोशं यथा कुसु मकोश नेत्रकोश इति ॥ कुश्यते । कुशसंश्लेषणे । अकर्तरि चेति घञ् ॥ अकुड्मले । हिरण्ये । कृताकृतयोर्हे मरूप्ययो. ॥

कोशकारः । पु । कुशिकार इति प्रसि द्धे इक्षुविशेषे पञ्चालगुणान् मृदु

न्वमध्ये ॥ कोशं करोति । · रण्ण ॥

कोशकृत् । पु । कोषकाराख्ये इक्षु॰ भेदे ॥

कोशफलम् । न । कक्कोले ॥ कोशे फल मस्य ॥

कोशफला । स्त्री । त्रपुष्याम् ॥ महाको शातक्याम् ॥

कोशल । पुं । अयोध्यायाम् । स रयूकूले निविष्टे जनपदविशेषे ॥ कुश्यति । कुशसंश्लेषणे । बोपदेव मते तालव्यान्त । वृषादित्वात् कलः । बाहुलकाद् गुणः ॥

कोशला । स्त्री । अयोध्यानगर्याम् । साकेते ॥ टाप् ॥

कोशलात्मजा । स्त्री । श्रीरामचन्द्रस्य मातरि । कौसल्यायाम् ॥ इति शब्द रत्नावली ॥

कोशशिम्बिकम् । न । मूस इति प्रसिद्धे धान्ये ॥ इति हेमचन्द्रः ॥

कोशस्थः । पुं । कोशस्थे जलचराख्ये गणे ॥

कोशाम्रम् । न । वृक्षविशेषे । मधुमूले । इत्कटे ॥ इतिहारावली ॥

कोशातकः । पुं । कठे ॥ कोशमतति । अत॰ । क्वुन् ॥

कोशातकी । पुं । वाणिज्ये ॥ वणिजि ॥

वहुवार्थौ ॥ इति विश्वः ॥

कोशातकी । स्त्री । पटोल्याम् ॥ घोषके । तोरई इति प्रसिद्धे शाके ॥ तत्पत्रशाकप्रकारस्तु । कोशातकी वल्लिभवाऽग्रपल्लवा तक्रेणयुक्ता सुघृतेन संस्कृता । सम्मर्जिता सैन्धवहिङ्गुमाधिके तैलेऽतिरुच्यावहुदृष्टिदायका इति ॥ तत्फले ॥ हरीतक्यादिभ्यश्चेतिफल प्रत्ययस्यलुक् । गौ० ङीष् ॥

कोशाम्र । पु । कोशाम इति गौडभाषाप्रसिद्धे फलवृक्षविशेषे । सुकोषके । क्षुद्राम्रे । कृमिवृक्षे ॥ कोशाम्र कुष्ठशोथाऽस्रपित्तव्रणकफापह. । तत्फल ग्राहि वातघ्न मम्लोष्णं गुरुपित्तलम् । पक्वन्तु दीपन रुच्यं लघूष्णं कफवातहृत् ॥

कोशिका । स्त्री । मुद्रपर्ण्याम् ॥

कोशी । स्त्री । पत्रदृश्याम् । पादरण्याम् ॥

कोष । पु । न । कुड्मले ॥ पानपात्रे ॥ दिव्ये । शपथे ॥ खङ्गपिधाने ॥ जातीकोषे ॥ अर्थसमूहे ॥ यथा । मुक्ताकनकरत्नाढ्य पितृपैतामहोपार्जित: । धर्मार्जितोव्ययसह कोष कोषज्ञसम्मत ॥ धर्म हेतोस्तथा र्थाय भृत्यानाम्भरणायच । आपदर्थ ञ्चसंरक्ष्य कोष कोषवता सदेति ॥ भिक्षाच राजकोषश्चस्तोकस्तोकेन वर्द्धते । अञ्जनञ्च धनञ्चैवस्तोकस्तोकेन क्षीयते ॥ पेश्याम् । पश्चिमाण्डे ॥ कुषति निष्कामत्यस्मात् स्वयमेव कुष्यते वा । कुषनिष्कर्षे । अकर्त्तरिचेति घञ् ॥ शब्दादिसमूहे ॥ योनौ ॥ कृताकृतस्वर्णरूप्ययो' । अकुप्ये । हिरण्ये ॥ शिम्बायाम् ॥ भाण्डागारे ॥ पनसादिफलान्त.स्थावयवे ॥ अन्नमयादिपञ्चसु ॥ द्वितीयभवने ॥ शब्दान्तरसयोगे गौणकवाचकोयम् । यथा । छत्रकोषो नेत्रकोषइत्यादि ॥

कोषक । पु । अण्डे ॥ अण्डकोषे ॥

कोषकार । पु । कुषारि इति गौडभाषा प्रसिद्धे इक्षुविशेषे ॥ कोषकारो गुरु: शीतो रक्तपित्तक्षयापह ॥ गुटिपोका इति गौ० प्रसिद्धे तन्तुकीटे ॥ कोषकारवदात्मानं वेष्टय वा ऽत्रवध्यसे ॥ अभिधानस्य कर्त्तरि ॥ कोष करोति । कर्मण्यण् ॥

कोषचञ्चु । पु । सारसखगे ॥

कोषपानम् । न । तत्तद्दितिकर्त्तव्यताकप्रकृतिषयजलपान रूपे परीक्षाविशेषे ॥

कोषफल. । पु । घोषाख्य०ध्याम् ॥

न । कर्पूरतुल्यगन्धद्रव्यविशेषे । कक्कोले ॥ कोषे फलमस्य ॥

कोषफला । स्त्री । पीतघोषायाम् ॥

कोषवृद्धि । स्त्री । अण्डवृद्धौ ॥ कुरण्डे ॥

कोषशायिका । स्त्री । छुरिकायाम् ॥

कोषस्थ । पु । जलचरजीवविशेषा वाङ्गवो ॥ यथा । शङ्खः शङ्खनकश्चापि शुक्तिशम्बूककर्कटाः । जीवा एवंविधाश्चान्ये कोषस्थाः परिकीर्त्तिता इति ॥ कोषस्थामधुरा स्निग्धाः पित्तवातहरा हिमाः । बृंहणा बहुवर्चस्का वृष्या श्च बलवर्द्धना इति ॥

कोषातक । पु । कचे । केशे ॥ कोठे ॥कोषमततति । अत० । क्वुन् ॥

कोषातकी । स्त्री । श्वेतघोषे । घोषके ॥ ज्योत्स्निकायाम् । पटोल्याम् ॥ कोषमतति । अत० । क्वुन् । गौरादित्वात् ङीष् ॥

कोषाम्रम् । न । कोसोड़ा इतिगौड़भाषाप्रसिद्ध फलविशेषे ॥ अस्यगुणा । कफवायुनाशित्वम् अग्निदीपनत्वम् मलवद्धताकारित्वञ्चेति ॥

कोषी । पु । आम्रवृक्षे ॥

कोषी । स्त्री । पादुकायाम् ॥

कोष्ठः । पु । कुशूले ॥ गृहमध्ये ॥ कुक्षे मध्ये ॥ यथा । स्थानान्यामाग्नि पक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुक फुप्फुसश्च कोष्ठइत्यभिधीयते इति ॥ त्रि । आत्मीये । निजे ॥ कुष्यते । कुष० । उषिकुषिगार्त्तिभ्यस्थन्निति थन् ॥

कोष्ठाक । पु । पर्वतान्तरे ॥

कोष्ठागारम् । न । धान्यादिकोष्ठके । कोठार इतिभाषा ॥

कोष्णम् । न । ईषदुष्णे । मन्दोष्णे ॥ त्रि । तद्वति ॥ ईषदुष्णात् कोष्णम् । ईषदर्थइतिकादेशः ॥

कोसल । पुं । सरयूतीरनिविष्ट जनपदविशेषे । अयोध्यानगयाम् ॥ कुस्यति । कुससंश्लेषणे । इन्ध्यान्तोनिर्विवादः । बाहुलकात् कलप्रत्ययोगुणश्च ॥ यद्वा । कौशृथिव्यां सलति गच्छति । सलगतौ । पचाद्यच् । पृषोदरादित्वात् कुशब्दस्यगुणः ॥

कोहल । पुं । वाद्यप्रभेदे ॥ नाट्यशास्त्रप्रवर्त्तकमुनिविशेषे ॥ मद्ये इति हेमचन्द्रः ॥

कौकृत्यम् । न । अनुतापे ॥ अयुक्तकरणे ॥

कौक्कुटिक । पु । दाम्भिके ॥ अदूरप्रेरितेक्षणे । भिक्षौ ॥ कुक्कुटीमायापादमात्रं । तौपश्यति । संचार्यां ललाटकुक्कुट्यौपश्यतीतिठक् । कु

कुटीशब्देन तत्पातार्हः स्वल्पदेशो लक्ष्यते । अन्यासीहि कीटादिवध भीत्या पादविक्षेपपर्याप्तदेशपर्यन्त मेव चक्षु सयम्य गच्छति ॥

कौकुटिकन्दल । पुं । बेडासाँप इति गौडप्रसिद्धे सर्पविशेषे । भाखडपुष्पे ॥ इतिचिकाण्डशेष ॥

कौक्ष । त्रि । कुक्षौ भवे ॥ तत्रभव. इ त्यण् ॥

कौक्षेयकः । पु । असौ । खड्गे ॥ कुक्षौ भ व । कुलकुक्षिग्रीवाभ्य श्वास्यलङ्का रेष्विति ढकञ् ॥

कौङ्क. । पु ।
कौङ्कण । पु ।
कौङ्किण. । पु । } कोंकनइतिप्रसिद्धे कोङ्कणदेशे ॥

कौट. । पु । कुटजवृक्षे ॥ स्वतन्त्रे ॥

कौटज' । पु । कुरैया इतिप्रसिद्धे वृक्षे । कुटजे ॥कूटोऽद्रिशृङ्ग तएवकौट कौटेजायते स्म । सप्तम्यांजनेर्ड । न । कुटजफले ॥ कौटजन्तु लघु स्वादु मृदु ग्राहि च पित्तलम् । ज्व रहृद्रोगपित्तासृगुदावर्त्त श्रमापजि त् ॥ कुटजकुसुमे ॥ तच्छाकप्रका रोयथा । काञ्जिकेन मधुरेण मुद्ग सं स्वेदितः कुटजपुष्पगुलुच्छ' । पा चित' सलवण स्तिलतैले याति हि क्रमुरभीरुचिमत्त्वम्॥ कौटजं कु सुमं ग्राहि सुस्वादु मदुशीतलम् । लघु हृद्रोगपित्तासृगुदावर्त्तज्वरं ह रेत् ॥

कौटतक्ष । पु । स्वकर्मजीविनि स्वा धीने निजालयस्थे तक्षणि ॥ कुट्या म्भव कौटः स्वतन्त्र सचासौ तक्षा च । ग्रामकौटाभ्यांतक्ष्ण इतिटच् समासान्त ॥

कौटल्य. । पु । वात्स्यायनमुनौ ॥

कौटसाक्षी । पु । मिथ्यासाक्षिणि ॥

कौटिक' । त्रि । खटीक इतिप्रसि द्धे मांसविक्रयजीविनि । वैतसिके ॥ कूटेन मृगादिबन्धनयन्त्रेण चरति । चरतीतिठक् ॥

कौटिलिक । पु । व्याधे ॥ कर्मारे ॥ कुटिलिकया हरति मृगान् अङ्गा रान्वा । अणुकुटिलिकायाइत्यण् ॥

कौटिल्यम् । न । अपसरणे ॥ चाणक्य मूलके ॥ कुटिलतायाम् ॥

कौडविकः । त्रि । कुडवपरिमितव्रीह्या दिवापयोग्ये क्षेत्रे ॥ कुडवस्य वाप. । तस्यवापइतिठञ् ॥ पात्रविशेषे ॥ कु डवंसम्भवति । सम्भवत्यवहरतिप चतीतिठञ् । कुडवस्तस्मिन् समा वेशयतीत्यर्थ' । टिड्ढेतिङीपि कौ डविकीत्याद्यपी । कुडवमुपसहर ति पचति वेत्यर्थः ॥

कौणप । पु । राक्षसे । क्रव्यादे ॥ कुणपमन्नं भक्षयितुमीशमस्य । शी लमित्यण् ॥ यद्वा । कोणं पाति । आतइतिकः । कौणपस्त्र निर्ऋते रत्न ए कौणपः । तस्येदमित्यण् ॥

कौणपदन्तः । पु । भीष्मे । इतित्रिकाण्डशेषः ॥

कौण्डिन्य. । पुं । मुनिविशेषे । विष्णुगुप्ते ॥ कुण्डिन्या.गोत्रापत्यम् । गर्गादिभ्यात्यञ् ॥ आगस्त्यकौण्डिन्ययोरगस्ति कुण्डिनजितिबहुत्वेयञोलुकि । कुण्डिना: ॥

कौतुकम् । न । अपूर्वविषयदर्शनोपभोगोत्साहे । कुतूहले ॥ उत्सवे ॥ अभिलाषे ॥ नर्मणि ॥ हर्षे ॥ परम्परायातमङ्गले ॥ उद्वाहसूत्रे । हस्तसूत्रे ॥ गीतादौ भोगकाले ॥ कुतूहल्मोमिलिखात्पाणं कायति । कै० । आतानुपेतिक. । उपपदसमासः । इकोह्रस्वोऽङ्योगालवस्येति-ह्रस्वः । प्रज्ञाद्यण् ॥ यद्वा । कुत्साम्भन. । अध्या० ठञ् । इसुसुक्तान्तात्कः । केऽण इति ह्रस्व. ॥

कौतूहलम् । न । कुतूहले । कौतुके ॥ कुतूहलति । इच्छाविलेखने । मू० कः ॥ यद्वा । इच्छति । इच० पचाद्यच् । कुत्साचलम् । प्रज्ञाद्यण् ॥ कुतूहलस्य कर्म भावो वा । यु० अण् ॥

कौत्सः । पु । कुत्सस्यापत्ये । ऋषिविशेषे ॥ ऋष्यण् । बहुत्वे कुत्साः ॥

कौदालीकः । पु । वर्णसङ्करजातिविशेषे ॥ सतुरजक्यांतीवराज्जात ॥

कौद्रविकम् । न । सौवर्चललवणे ॥

कौद्रवीण । त्रि । कोद्रवक्षेत्रे ॥ कोद्रवाणां भवनं क्षेत्रम् । धान्यानाम्भवने क्षेत्रेखञ् ॥

कौन्तिक । त्रि । प्रासिके । कुन्तयोधिनि ॥ कुन्तः प्रहरणमस्य । प्रहरणमितिठक् ॥

कौन्ती । स्त्री । रेणुकायाम् । भक्षागन्धिन्यौषधौ ॥ कुन्तिषु देशविशेषे सुभवा । तत्रभवइत्यण् । ङीप् ॥

कौन्तेय. । पु । युधिष्ठिरादिकुन्तीतनयेषु ॥ अपत्ये स्त्रीभ्योढक् ॥ अर्जुनवृक्षे ॥

कौपम् । न । कूपोदके ॥ भूमौखातोऽल्पविस्तारो गम्भीरो मण्डलाकृति. । बद्धोऽबद्ध स कूपः स्यात्तदम्भ कौपमुच्यते ॥ कौपं पयो यदि स्वादु पित्तदोषघ्नं हितं लघु । तत् क्षारं कफवातघ्नं दीपन कफकृत्परम् ॥

कौपीनम् । न । अकार्ये ॥ चीरे । मेखलाबद्धपरिधेयखण्डे ॥ गुह्यप्रदेशे ॥ पापे ॥ कूपपतनमर्हति कौपीन

म् पापम् । तत्साधनत्वात् तदङ्गोप्यत्वात् पुरुषलिङ्ग मपिकौपीनम् । तत् सम्बन्धात् तदाच्छादन मपि कौपीनम् । आलीनकौपीने अघृष्टा कार्ययोरितिसाधु । नाज्ञावयवार्थे ऽतीवाभिनिवेष्टव्यम् । रूढिशब्दत्वात् ॥

कौमारम् । न । जन्मावधिपञ्चमाब्दपर्यन्ताया मवस्थायाम् । पञ्चमाब्दमभिव्याप्यावस्थायाम् ॥ कौमारम्पञ्चमाब्दान्तमित्युक्त ॥ कुमारस्यकर्म भावोवा । वयोवचनत्वादण् ॥ तन्त्रमते षोडशवर्षपरिमितायाम वस्थायाम् ॥ जात. कु पृथिवीं पञ्चां मारयेत् तत्कुमारक. । इति प्रमाणतो विद्धि कौमारं प्राग्भवाब्दत ॥ तद्वति । पु । स्त्री ॥ पु । युवराजे । कुंवरइति भाषा ॥ सर्गविशेषे ॥ पत्यौ ॥ अपूर्वपतिङ् कुमारीं पतिरुपपन्न' । कौमारापूर्ववचन इतिद्वितीयान्तादुपयमनकर्त्तयण् प्रत्ययेनसाधु ॥

कौमारभृत्यम् । न । वैद्यविद्याङ्गविशेषे ॥ यथा । कुमाराभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थाना ञ्च व्याधीना मुपशमनार्थं य त् तत् ॥

कौमारी । स्त्री । मातृकाविशेषे । कार्त्तिकेय शक्तौ ॥ वाराहीकन्दे ॥ भार्यायाम् ॥ अपूर्वपति कुमारी पतिमुपपन्ना । कौमारापूर्ववचनेइति प्रथमान्तात् स्वार्थे ऽण् प्रत्यये नसाधु ॥

कौमुद । पु । कार्त्तिकमासे ॥

कौमुदिका । स्त्री । उमासखीविशेषे ॥

कौमुदी । स्त्री । ज्योत्स्नायाम् । प्रकाशिकायाम् ॥ आश्वयुज्यां पूर्णिमायाम् ॥ कुमुदानामियम् । तस्येदमित्यणिटिड्ढेतिङीप् ॥ कार्त्तिक्याम् । कार्त्तिकोत्सवे ॥ कुशब्देन मही ज्ञेया मुद्हर्षे ततोद्वयम् । धातुज्ञैर्नियमैश्चैव तेन सा कौमुदीस्मृता ॥ कौ मोदन्ते जना यस्यां नानाभावै परस्परम् । हृष्टा तुष्टा सुखापन्ना स्तेन सा कौमुदी स्मृता ॥

कौमुदीचार । पु । न । कोजागरपूर्णिमायाम् । शारद्याम् ॥

कौमुदीपति । पु । इन्दौ ॥ कौमुदा. पति ॥

कौमुदीवृक्ष: । पु । दीपवृक्षे । दीवट इति भाषा ।

कौमोदकी । स्त्री । विष्णोर्गदायाम् ॥ को पृथिव्या मोदक पालकत्वात् कुमोदको विष्णु: तस्येयम् । अण् । ङीप् ॥

कौमोदी । स्त्री । कौमोदक्याम् ॥

कौरव । पु । कुरुराजसन्ततौ । धृतराष्ट्रादिषु । पाण्डवेषु च ॥ पाण्डो' कुरुवंशजत्वात् । कुरोरयम् । कच्छादिभ्यश्चेत्यण् ॥

कौरवक' । पु । कौरवे ॥ कुरुषु भव कुरोरयं वा । विभाषा कुरुयुगन्धराभ्यामिति वुञ् ॥

कौरव्य. । पु । कौरवे ॥ कुरोरपत्ये । कौरव्य कौरव्यौ कौरव्या ब्राह्मणा । कुर्वादिभ्योण्य' ॥ चत्रियेतु । कुरुनादिभ्योण्य इति ण्येकृते तद्राजस्य बहुषु तेनैवास्त्रियामितिबहुत्वे लुकि कौरव्य कौरव्यौ कुरव. इति बोध्यम् ॥

कौर्प्यः । पु ।<br>
कौर्प्यास्य. । पु । } वृश्चिकराशौ ॥

कौल. । त्रि । आन्वयिके । सत्कुलोत्पन्ने । कुलीने ॥ दिव्यवीरपशुभावान्तर्गते दिव्यभावरते । कुलाचाररते । ब्रह्मविदि ॥ यथा । दिव्यभावरत कौल. सर्वत्र समदर्शन इति ॥ अपि च । पशो वैष्णा ह्यव्यमन्त्र. पशुरेव न संशय । वीरा ह्यव्यमनु वीर' कौला ब्रह्मविद्भवेदिति मत्स्यानीतन्त्रम् ॥ कुलेभवः । अण् ॥

कौलटिनेयः । पु । स्त्री । कौलटेये । सतीभिक्षुक्या. सुते । सत्या भिक्षार्थं गेहाद्गेहमटन्त्याः पुत्रे ॥ कुलटाया अपत्यम् । कुलटायावेतीनङ् । स्त्रीभ्योढक् ॥

कौलटेय' । पु । स्त्री । कौलटिनेये । सतीभिक्षुकीपुत्रे ॥ असतीपुत्रे । बान्धकिनेये । बन्धुले ॥ कुलटाया: अपत्यम् । स्त्रीभ्योढक् ॥

कौलटेर' । पुं । असतीसुते । बान्धकिनेये । कौलटेये ॥ कुलटाया. अपत्यम् । क्षुद्राभ्योवेतिढ्रक् । अत्रन्हीना ग्रीवत्तीनाहि क्षुद्रा ॥

कौलत्थः । त्रि । कुलत्थसम्बन्धिनिरसादै ॥ कुलत्थस्यायम् । तस्येदमित्यण् ॥ कुलत्थै. संस्कृते ॥ कुलत्थकोपधादण् ॥

कौलत्थीनम् । त्रि । कुलत्थोद्भवक्षेत्रे॥ कुलत्थानाम्भवनङ्क्षेत्रम् धान्यानाम्भवने क्षेत्रेखञितिखञ् ॥

कौलव: । पुं । ववादिषु तृतीयकरणे॥ तत्रजातस्यफलं यथा । वाग्मी विनीतो नितरांस्वतन्त्रः प्रागल्भ्ययुक्तो मनुजो महौजा । सुसम्मत: स्या द्विदुषां कृतज्ञ श्चेत् कौलवाख्यं करणंप्रसूताविति ॥

कौलालकम् । त्रि । कुलालेन कृते ॥ कुलालादिभ्यो वुञ् ॥

कौलिक । पु । तन्तुवाये ॥ कुलमार्ग प्रवर्त्तके परशिवे ॥ शक्तकौलिक इतिश्रुते ॥ त्रि । कुलमार्गस्थे । ब्रह्मविदि ॥ पाषण्डे ॥ कुलपरम्परायाते ॥ यथाकौलिक धर्मएष. ॥

कौलीनम् । न । गुह्ये ॥ जन्ये । परीवादे । लोकापवादे ॥ अकार्ये । कुकर्मणि ॥ कुलीनत्वे ॥ अहिपशुपक्षिशुनां युधि । प्राणिद्यूते ॥ कुलीनस्य कर्मभावोवा । युवादित्वादण् ॥

कौलीन्यम् । न । कुलीनत्वे ॥

कौलीरा । स्त्री । कर्कटशृङ्ग्याम् ॥

कौलेय । त्रि । कुलीने ॥ इतिद्विरूपो भरतस्य ॥

कौलेयक । पु । कुक्कुरे । शुनि ॥ कुलेभव. । कुलकुक्षिग्रीवाभ्य श्वास्यलङ्कारेष्वितिढकञ् ॥ त्रि । कुलीने ॥ कुलस्यापत्यम् । अपूर्वपदादन्यतरस्यांयड्डकञावितिढकञ् ॥

कौल्माषीणम् । त्रि । कुल्माषोद्भवक्षेत्रे ॥ कुल्माषाणां भवनङ्क्षेत्रम् । धान्यानामितिखञ् ॥

कौल्य । त्रि । कुलीने ॥ इतिद्विरूपकोष' ॥

कौवलम् । न । कुवले । कोलिफले ॥

कौवेरम् । न । कुष्ठौषधौ ॥ त्रि । कुवेराऽनुगे ॥ कुवेरसम्बन्धिनि तलायैच ॥ कुवेरस्येदमित्यर्थे ऽण्

कौवेरी । स्त्री । मातृभेदे ॥ उत्तरदिशि ॥ कुवेरशक्त्याम् ॥ अणन्तान्ङीप् ॥

कौशम् । न । कान्यकुब्जदेशे ॥

कौशलम् । न । क्रियायां नैपुण्ये । कुशलतायाम् ॥ यथा । क्वचातिकर्कश शास्त्र. क्वचातिललित शुचि । एकत्र काव्ये व्याख्यातु स्ना वहो कौशलं कवे ॥ इत्यमरकमलकटीका ॥ कुशलस्य कर्मभावो वा । यु॰ अण्

कौशलिका । स्त्री । प्राभृते । उपायने ॥ कुशलप्रश्ने ॥

कौशली । स्त्री । कुशलप्रश्ने ॥ प्राभृते ॥

कौशलेय ।पु । श्रीरामे । रघूत्तमे ॥

कौशल्यम् । न । कुशलतायाम् ॥ कुशलस्य कर्मभावो वा । ब्राह्मणादित्वात् ष्यञ् ॥ त्रि । कोशलायांभवे ॥

कौशल्या । स्त्री । राममातरि ॥ कुशलैव । स्वार्थेष्यञ् ॥

कौशल्यायनि. । पु । कौसल्यायनौ ॥

कौशल्येय । पु । सीतापतौ । श्रीरामे ॥ कौशल्यायाअपत्येर्थेढक् ॥ मनोमयादान्तरे विज्ञानमये कोषे ॥ कौशल्या सर्वार्थावयोमसतमर्थावुद्धिस्तस्याभव ॥

कौशाम्बी । स्त्री । कुशाम्बनिर्वृत्तायां

नगर्याम् । वत्सपत्तने ॥ कुशाम्बे न निर्वृत्ता । तेननिर्वृत्तमित्यण् । ङीप् ।

कौशिक । पु । विश्वामित्रमुनौ ॥ कुशिकस्यापत्यम् ऋष्यण् । गोत्राऽप त्येतु बिदाद्यञ् ॥ कौशभवो वा ॥ अध्या० ठञ् ॥ नकुले ॥ व्यालग्राहे ॥ गुग्गुलौ ॥ शक्रे ॥ कोषज्ञे ॥ उलूके ॥ शृङ्गाररसे ॥ मज्जनि ॥ अश्वकर्णवृक्षे ॥

कौशिकप्रिय । पुं । रामचन्द्रे ॥

कौशिकफलः । पुं । नारिकेले ॥

कौशिका । स्त्री । नारिकेलफलनिर्मिते पानपात्रे ॥ इति हेमचन्द्रः ॥

कौशिकात्मज. । पु । अर्जुने । पार्थे ॥

कौशिकायुधम् । न । इन्द्रचापे ॥

कौशिकाराति. । पु । काके ॥

कौशिकी । स्त्री । चण्डिकायाम् ॥ कोशान्निर्गता । तदुक्तम् । शरीर कोशाद्यत्तस्याः पार्वत्यानि. सृता म्बिका । कौशिकीतिसमस्तेषु स तोलोके षुगीयत इति पृषोदरा त्वात्साधुत्वम् ॥ तल्लसाने ॥ नदी विशेषे ॥ नाट्यवृत्तौ ॥

कौशिकद्रोज. । पु । आक्षोटवृक्षे ॥

कौशीतकी । स्त्री । उपनिषद्विशेषे ॥ अगस्त्यमुनेर्भार्यायाम् । लोपामुद्रायाम् ॥

कौशीलवम् । न । नृत्यगीतवादित्रानुबन्धे ॥

कौशेयम् । त्रि । कृमिकोशोत्थवस्त्रादौ । रेशमिकपडा इति भाषा ॥ कोशे सम्भूतम् । कोशाड्ढञ् । कोशस्यविकारो वा । विकारे वा ढञ् ॥

कौषिक । पु । कोशिकार्थेषु ॥

कौषिकी । स्त्री । उमायाम् । नदीविशेषे ॥

कौसल्या । स्त्री । श्रीरामचन्द्रजनन्याम् ॥ कोसलस्य राज्ञो ऽपत्यं स्त्री । वृद्धेत् कोसलाजादाञ्ञ्यङ् इति ञ्यङ् । यङश्चापितिचाप् ॥ सूत्र निर्देशात् कोसलशब्दो दन्त्यसकारमध्य ॥

कौसल्यानन्दन. । पु । श्रीरामे ॥ कौसल्याया नन्दन ॥

कौसल्यानन्दवर्द्धन. । पुं । श्रीरामचन्द्रे ॥ कौसल्याया आनन्द वर्द्धयति तच्छील । अनुदात्तेतश्चेतियुच् ॥ कौसल्यानन्दस्य वर्द्धनो वा ॥

कौसल्यायनिः । पु । श्रीरामे ॥ कोशलस्यापत्यम् । कौशल्यकार्मार्याभ्यां चेतिफिञ् । परमप्रकृतेरेवायमिष्यते । तार्हंसूत्रे विकृतिनिर्देशोव्यर्थ. स्यात् । मध्यर्थ. । यत प्रत्ययस

न्वियोगेन प्रकृतिरूपनिपात्यते ॥ कौसल्यादयस्तालव्यमध्याअपि बोध्या. ॥

कौसीद्यम् । न । आलस्ये । तन्द्रायाम् ॥ कुसीदस्यभावे ॥

कौसुमम् । न । कुसुमाञ्जने । पुष्पाञ्जने ॥

कौसुम्भ. । पु । अरण्यकुसुम्भे ॥ न । शाकविशेषे ॥ यथा । कौसुम्भ कोमल शाक कासमर्दविमर्दितम् । पाचितं तत्सुष्टते माणिमन्थविमिश्रितम् ॥ कौसुम्भं कासजि च्छ कं रूक्ष मुष्णञ्च पित्तलम् । सुस्वादु मधुरं पाके लघु रुच्य सरं हितमिति ॥ त्रि । कुसुम्भपुष्परागयुक्ते । कसूंभा कसूमी इति भाषा ॥ कुसुम्भेन रक्तम् । तेनरक्त रागादित्यण् ॥ तस्येदमित्यण् वा ॥

कौसृतिक. । त्रि । मायाकारे ॥ कुसृत्याचरति । ठक् ॥

कौस्तुभ । पु । विष्णोर्मणिभेदे ॥ यथा । आत्मान मस्य जगतो निर्लिप्त मगुणामलम् । बिभर्त्तिकौस्तुभ मणिस्वरूप भगवान् हरिरितिविष्णुपुराणम् ॥ कुत्सितं स्तुभ्नाति व्याप्नोति इतिकुस्तुभो ऽब्धि । तत्रभव । अण् ॥ कुं स्तोभते इति कुस्तुभो विष्णु । स्तुभस्तम्भे । मूःक' । तस्यायमिति वा ॥

कौस्तुभलक्षक । पु । विष्णौ ॥

कौस्तुभवक्षा । पु । पृश्निगर्भे । विष्णौ ॥

क्रकच । पु । ग्रन्थिलाख्यतरौ ॥ पु । न । करपत्रे । करवत् करौत आराइति भाषा ॥ योगविशेषे ॥ षष्ठ्यादिति थयो मन्दा दिलोम क्रकच' स्मृत ॥ क्र० इति कचति । कचशब्दे । पचाद्यच् ॥

क्रकचच्छद' । पु । केतकीवृक्षे ॥ क्रकचसदृशा च्छदा यस्य सः ॥

क्रकचपत्र. । पुं । शाकवृक्षे ॥

क्रकचपात् । पु ।
क्रकचपाद । पु । } कृकलासे ॥

क्रकचपृष्ठी । स्त्री । कवयी इतिप्रसिद्धे मत्स्ये ॥

क्रकण' । पु । कयार इतिगौडभाषाप्रसिद्धे पक्षिविशेषे । कृकरे ॥ क्रइति कणति । कण० । अच् ॥

क्रकर । पु । करीरवृक्षे ॥ क्रकचे ॥ दीने ॥ क्रकचे ॥ क्रइतिकरोति । अच् ॥ क्रइतिशब्दकरणशील' । कृञो हेतुताच्छील्येतिट ॥

क्रतु' । पु । यज्ञे । श्रौताग्निष्टोमादौ ॥ सोमसाध्ययागे । यूपसहिते यज्ञे ॥ काम. क्रतु कर्म जन्म स्त्येषामेव

क्रमोभवेत्। तत्रकामक्रत्वोरभेदमा शङ्क्याह। पुंसो या विषयापेक्षा स काम इति भण्यते॥ स एव वर्द्धमान सन् क्रतुत्वं प्रति पद्यते। रुचेरति शय त्याम्ये विषये क्रतुरीर्यते इति॥ सङ्कल्पे॥ ब्रह्मणः कराज् जातेम रीच्याद्यन्तर्गते मुनिविशेषे॥ अध्य वसाये। यथैवैनान्ययेन्ध्य विचल प्रत्यये॥ निश्चदेश्चवि० ॥ करोति क्रियते वा। कृञ क्रतु॥ इन्द्रियेषु॥

क्रतुच्छद। पु। वृक्षभेदे॥

क्रतुदोषनुत्। पु। प्राणायामे॥ क्रतु शब्देनेन्द्रियाणि सङ्कल्पोदातेषांदो षा। विहिताननुष्ठाननिषिद्धाचर णकृता, तान् नुदति उपशमयतीति क्रतुदोषनुत्। उक्तञ्च। दह्य न्ते ध्मायमानानां धातूनाञ्च यथा मलाः। प्राणायामैस्तथा दोषा णामन्तीन्द्रियगोचराइति॥

क्रतुप्रकृट्। पुं। असुरे॥ नास्तिके॥

क्रतुद्विट्। पु। असुरे॥ नास्तिके॥ क्र तुद्वेष्टि। द्विष अप्रीतौ। सत्सूद्वि षेतिक्विप्॥

क्रतुध्वंसी। पुं। वृषाङ्के। शिवे॥ क्र तु दक्षयज्ञं ध्वंसयति। ध्वंसु०। सु प्यजातावितिणिनि॥

क्रतुपशु। पु। अश्वे॥ इतिहारावली॥

क्रतुपुरुष। पु। विष्णौ॥

क्रतुभुक्। पु। अमरे। देवे॥ क्रतुं क्रतौ वा भुङ्क्ते। भुजपालनाभ्यव हारये। अन्येभ्योपिदृश्यते इति क्विप्॥

क्रतुराज। पु। राजसूययज्ञे॥ क्रतू नाराजा। टच्॥

क्रतुविक्रयी पु। क्रतुविक्रायके। स दीययागस्य फलं तव भवत्विन्यभि धायधनग्राहिणि॥

क्रतूत्तम। पु। राजसूययज्ञे॥ क्रतुषु उत्तम॥

क्रथकैशिका। पु। भूमि। विदर्भदेशेषु॥

क्रथनम्। न। मारणे॥ क्रथहिंसाया म्। भावे ल्युट्॥ मुक्तागुणचि॥

क्रथनकम्। न। क्रथनार्थे। स्वार्थेकः॥

क्रन्दनम्। न। रोदने। शोकादिना ऽश्रुपतने॥ आह्वाने॥ क्रदिआह्वा नेरोदनेच। भावे ल्युट्॥ योधस रावे॥ पु। विडाले॥ इतिशब्दमाला॥

क्रन्दितम्। न। आह्वाने॥ रुदिते॥ युधिचीत्कृतौ॥ क्रदि०। क्त॥

क्रम.। पु। अनुक्रमे। नियतपूर्वापर भावात्मनि॥ शक्तौ॥ विधाने। क ल्पे॥ आक्रमणे॥ चरणे। अङ्घ्रौ॥ विततिविशेषे॥ भिषजांमते चिकित् सायाम्॥ क्रमया मनेन वा। क्रमु०

। घञ् । नोदात्तोपेति न वृद्धिः ॥ क्रामतिगच्छति वा । क्रमे पवादच् ॥ पादविक्षेपे ॥

क्रमक । पु । क्रमज्ञे ॥ क्रममधीते वेदवा । क्रमादिभ्योवुन् ॥

क्रमण । पु । चरणे ॥ न । अतिक्रमे ॥

क्रमनिग्रह । पु । हठनिग्रहादन्यस्मिन्मनसो निग्रहे ॥ क्रमनिग्रहेचाऽध्यात्मविद्याप्राप्त्यादयउपाया । अध्यात्मविद्याच दृश्यमिथ्यात्वं दृग्वस्तुन. एकत्वञ्चबोधयति । तथाच सति एतन्मन स्वगोचरेषु दृश्येषु प्रयोजनाभावप्रयोजनवति दृग्वस्तुनि अगोचरत्वञ्च बुद्ध्वा निरिन्धनाग्निवत् स्वयमेवोपशाम्यति । तथा चश्रूयते । यथानिरिन्धनो वह्नि स्वयोनावुपशाम्यति । तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यतीति ॥ योनिरात्मा ॥

क्रमपूरक । पु । वकवृक्षे ॥

क्रमशः । अ । क्रमेण क्रमेणेत्यर्थे । ढवठवसे इतिभाषा ॥

क्रमागतम् । त्रि । क्रमायाते । पितृपितामहादिक्रमेण प्राप्ते ॥ यथा । अस्वतन्त्रा स्त्रिय सर्वा पुत्रदासपरिग्रहा । अस्वतन्त्र स्तत्र गृही यत्र तत्क्रमात् क्रमागतमिति नारद ॥

क्रमायात । त्रि । क्रमागते ॥

क्रमु । पु । गुवाके ॥ क्रामति । क्रमु० । बाहुलकादु ॥

क्रमुक । पु । भद्रमुस्तके ॥ ब्रह्मदारुणि ॥ कार्पासिकाया फले ॥ पट्टिकालोध्रे ॥ पूगे । गुवाके ॥ क्रमति । क्रमु० । बाहुलकादु । कन् ॥

क्रमुकफलम् । न । गुवाके ॥

क्रमुकी । स्त्री । गुवाकद्रुमे ॥

क्रमेल. । पु । उष्ट्रे ॥

क्रमेलक पु । उष्ट्रे । महाङ्गे ॥ क्रामति । क्रमु० । क्विप् । एलति इलगतौ । एलयतिवा । इलक्षेपे । ण्वुल् । क्रम् चासौ एलकश्च ॥

क्रय । पु । मूल्येनपरस्माद्द्रव्यग्रहणे द्रव्यदानेनान्यस्वत्वस्वीकारे ॥ यथा । निश्चित्य वस्तुतन्मूल्य मुभयो: सम्मतौ शिवे । परस्परानाकरणा क्रयसिद्धिस्ततोभवेदिति ॥ अपिच । क्रयसिद्धिरदृष्टाना गुणश्रवणतोभवेत् । विपर्यये तद्गुणानामन्यथाभवतिक्रयइतिश्रीमहानिर्वाणतन्त्रम् ॥

क्रयलेख्यम् । न । भूम्यादिक्रयलिपौ । क्रयाला कवाला इतिभाषा ॥ यथा । गृहं क्षेत्रादिक क्रीत्वा तुल्य मूल्याक्षरान्वितम । पत्रकारयतेयत्तु क्रयलेख्य तदुच्यते ॥ इतिवृहस्पत ॥

क्रयविक्रय । पु । वाणिज्ये । बयाज इति भाषा ॥

क्रयविक्रयानुशय. । पु । क्रयविक्रययो पश्चात्तापे । अष्टादशविवादान्तर्गत विवादविशेषे ॥ यथा । क्रीत्वाविक्रीय वाकिञ्चिद्यस्येहानुशयो भवेत् । सोऽन्तर्दशाहात्तद्द्रव्य दद्याच्चैवाददीत वेतिमनुः ॥

क्रयविक्रयिक । पु । वणिजि ॥ क्रयविक्रयाभ्यां जीवति । वस्त्रक्रयविक्रयाट्ठन् ॥

क्रयविक्रयी । त्रि । क्रयविक्रयकर्त्तरि ॥

क्रयशीर्षम् । न । } कपिशीर्षे । प्राकारा
क्रयशीर्षकम् । न । } ग्रे ॥ इतित्रिकाण्डशेषः ॥

क्रयारोह । पु । हट्टे । हाट इति भाषा ॥

क्रयिकः । त्रि । क्रायके । क्रेतरि ॥ क्रयजीवनौ । वणिजि ॥ क्रयेण जीवति । वस्त्रक्रयविक्रयाट्ठन् । क्रयविक्रयग्रहणसङ्घातविगृहीतार्थम् ॥ यद्वा । क्रीणाति । डुक्रीञ् द्रव्यविनिमये । क्रियष्ठकन ॥

क्रयी । त्रि । क्रयकर्त्तरि । क्रेतरि ॥ क्रयोऽस्त्यस्य । इनि ॥

क्रय्यम् । त्रि । हट्टासादितवस्तुनि । क्रेतारो ग्राहका' क्रीणीयुर्गृह्णीयुरिति बुद्ध्या आपणे प्रसारिते द्रव्ये ॥ क्रीयते । डुक्रीञ्० । अचोयत् । क्रय्यस्तदर्थे इति साधु ॥

क्रव्यम् । न । मांसे ॥

क्रव्यघातन । पु । मृगे ॥

क्रव्यात् । पुं । कैाणपे । राक्षसे ॥ त्रि । आममांसभोजिनिगृध्रादो ॥ क्रव्यमाममांसं मत्तीतिविग्रहे क्रव्येत्तिविट् ॥

क्रव्याद । पुं । अनले । राक्षसे ॥ सिंहे ॥ श्येने ॥ क्रव्यादोऽमृतभक्षये इत्युक्ते शवभक्षकाग्नौ ॥ त्रि । मांसाऽशिनि ॥ मांसमत्तीतिविग्रहे अदऽसमणश्च । पृषोदरादित्वादुपपदस्य क्रव्यादेश' ॥ कृत्तं छिन्नं सदेव पुनर्विशेषत कृत्तं पक्वं भुङ्क्ते इतिक्रव्याद. । कृत्तविकृत्तपक्वशब्दस्य प्र० क्रव्यादेश इतिकाशिका ॥

क्रशितः । त्रि । कृशीकृते ॥ कृशशब्दात् तत्करोतीतिण्यन्तात् कर्मणि क्त । णाविष्ठवद्भावे । रऋतोहलादेर्लघोरित्यृकारस्यरेफादेश ॥

क्रशिमा । पु । कार्श्ये ॥ कृशस्य भावः । पृथ्वादित्वादिमनिच् । रऋतोहलादोरितिरेफादेश' ॥

क्रशीयान् । त्रि । अत्यन्तकृशतरे ॥ स्थौल्ये ॥ तनीयसि ॥ अयमनयोरतिशयेनकृशः । द्विवचनविभज्येत्तीयसुन्

नि रक्तशब्दतिरेफादेश.॥

क्राम.। पु। अग्रे। इये॥ क्रामति। क्रमु०। क्र॥ चि। आक्रान्ते॥ निष्क्रान्ते॥ व्याप्ते॥ सङ्क्रान्ते॥

क्रान्तदर्शी। त्रि। कवौ। अतीतानागतायशेषवस्तुदर्शिनि॥ क्रान्तमस्य दादीन्द्रियविषयतामतिक्रान्तवस्तु सर्वविषयव्यापियथा स्यात्तथावादृष्टुं शीलमस्य॥

क्रान्ता। स्त्री। इचन्याम्॥

क्रान्तिः। स्त्री। आक्रमे॥ गतौ॥ खगोलमध्यवर्त्तिसूर्यगमनार्थे तिर्य्यग्गोलरेखायाम्॥ यथा। अयनाद्यमं यावत् कक्षा तिर्यक् तथापरा। क्रान्तिसंज्ञा तया सूर्यं सदापर्य्येति भासयन्निति॥

क्रान्तिवलय। पु। क्रान्तिमण्डले। विषुवद्वृत्तात्चतुर्विंशतिभागैर्दक्षिणोत्तरे यद्वृत्तंतस्मिन्॥

क्रान्तु। पु। खगे। पक्षिणि॥ क्रामति। क्रमु०। क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च॥

क्रामन्। त्रि। पादविक्षिपति।

क्रायक। पु। क्रयिके। क्रेतरि। ग्राहके॥ क्रीणाति। डुक्रीञ् द्रव्यविनिमये। ण्वुल्॥ क्रयजीविनि॥

क्रिमि.। पु। कृमौ। कीटाकृौ। ह्रस्वजन्तौ॥ लाक्षायाम्॥ कृमिले॥ खरे॥ रोगविशेषे॥ अस्यनिदानम्। यथा। अजीर्णभोजी मधुराम्लनित्यो द्रवप्रियः पिष्टगुडोपभोक्ता। व्यायामवर्जीच दिवाशयानो विरुद्धभोजी लभते क्रिमींश्चेति॥ क्रामति। क्रमु०। क्रमितमिशतिस्तम्भामतइच्चेतीन्॥

क्रिमिकण्टकम्। न। कृमिकण्टके॥

क्रिमिघ्न। पुं। विडङ्गे॥ क्रिमीन् हन्ति। हन०। अमनुष्यकर्तृकेपुचे तिटक्। अतएवैश्चेतिनियमान्नणत्वम्॥

क्रिमिघ्नी। स्त्री। सोमराज्याम्॥ टित्वान् ङीप्॥

क्रिमिजम्। न। अगुरुणि॥

क्रिमिजा। स्त्री। लाक्षायाम॥ क्रिमिभिर्जन्यते। जनी०। ड॥

क्रिमिशत्रु। पु। पारिभद्रामादार इति गौडप्रसिद्धे रक्तपुष्पकेमन्दारे॥ क्रिमीणांशत्रु॥

क्रिमिशाखव। पु। विटखदिरे॥

क्रिमिशैल। पु। वल्मीके। नाकौ। बाँबी इति बँबई इतिचभाषा॥

क्रिय। पु। मेषराशौ॥

क्रियमाणम्। न। वर्त्तमानदेहनिर्वर्त्यकर्म्मणि॥

क्रिया । स्त्री । उपाये ॥ चेष्टायाम् । इन्द्रियव्यापारे ॥ सा च पाकादिरूपा पात्रादिग्रहणानामुपलतौ निमित्तम् । आरम्भे ॥ निष्कृतौ ॥ पूजायाम् ॥ सम्प्रधारणे ॥ कर्मणि ॥ शास्त्रविहितनित्यनैमित्तिकत्वाद्यात्मककर्मक लापात्मिका क्रिया सा चेयोगपत्नी । यथा । क्रियातु योगपत्नीव पूजिता सर्वसंमता । यया विना जगत्सर्वं विधिहीनञ्च नारदेति भगवद्वाक्यं देवीभागवते ९ स्कन्धे ॥ शिक्षायाम् ॥ चिकित्सायाम् ॥ करणे ॥ धात्वर्थे करोत्यर्थो वा क्रियेति वैयाकरणा ॥ आख्याते ॥ गर्भाधानादिसंस्कारे ॥ चतुष्प्रकारव्यवहारपादान्तर्गतव्यवहारपादविशेषः क्रिया । सा द्विधा । मानुषी दैवीच । तथाच । स । स्यले खानुमानभेदेन त्रिधा । विताया घटाग्न्युदकविषकोपतप्तकुम्भतसमाषकफाल धर्मजभेदेन नवधा दिव्यपदवाच्या । यथा । द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा । साक्ष्यलेख्यानुमानञ्च मानुषी त्रिविधा स्मृता ॥ घटाद्याधर्मजान्ताश्च दैविकी नवधा स्मृतेति वृहस्पति' ॥ भावे ॥ करणाद् क्रियते वा । अन्येति योगविभागात् भावादौ कृञः श प्र

त्यय । रिङ् शयग्लिङ्क्षु । अचिश्नु धातुभ्रुवांय्वोरियङुवङाविति यङ् ॥ क्रियाकार । पु । नवच्छ मे । नवा विधार्थी इतिभाषा ॥ क्रियां करोति । अण् ॥ क्रियाया, कारो नियम, पञ्चवन्धो वाव्यवस्थापनंवा ॥ चि । क्रियाकृति ॥ क्रियादेषी । पु । साक्ष्यलिखितभुक्तियुक्तिशपथद्वेष्टरि ॥ सच व्यवहारविषयेपञ्चधाजनान्तर्गतहीनविशेषः । यथा । अन्यवादी क्रियादेषी नोपस्थायी निरुत्तर । आहूतप्रपलायी च हीन पञ्चविध स्मृतइतिनारद, ॥ त्रि । कर्मद्वेष्टरि ॥

क्रियपाद । पु । चतुष्पादव्यवहारान्तर्गततृतीयपादे ॥ यथा । पूर्वपक्ष, स्मृत पादो द्वितीयश्चोत्तर स्मृत, । क्रिया'ाद स्तथाचान्य श्चतुर्थो निर्णय, स्मृत इतिवृहस्पति । सचसाक्ष्यलिखितभुक्तियुक्तिशपथ रूपः ॥ क्रियाफलम् । न । कर्मफले ॥ उत्पत्त्यादिष ॥ यथा । उत्पत्ति राप्ति विकृति, संस्कृतिश्च चतुर्विधम् । क्रिया फल प्राहु रार्यो कैवल्ये तन्न सम्भवेदिति ॥

क्रियाभ्युपगम । पु । परस्परक्रियास्वीकारे । द्वयो पुरुषयो, कस्मिंश्चिद्विषये परस्पराङ्गीकारेणाऽनुमतौ ॥

यथा। क्रियाभ्युपगमात् क्षेत्रबीजार्थं यत् प्रदीयते। तस्येहभागिनौ दृष्टौ बीजी क्षेत्रिक एवचेतिमनु ॥

क्रियायोग । पु । देवाराधनतद्गाखयादिकरणरूपायां पुण्यक्रियायाम् ॥ अग्रनारद प्रतिब्रह्मोवाच। ज्ञानयोगस्तु योगस्य यस्तु साधनमात्मना। यस्तुबाह्यार्थ संयोग क्रियायोग सउच्यते ॥ प्रधान कारणं योगोमुक्तेर्मुनिवरोत्तम। क्रियायोगस्तु योगस्य परम तातसाधनमिति वह्नि पुराणम्॥

क्रियावान्। त्रि। कर्मणिरते। कर्मठ्ठे ॥ क्रियाअस्ति। तदस्यास्तीति मतुप् ॥

क्रियावसन्न । त्रि । साक्ष्यादिनाप्रासपराजये॥यथा। स्वयमभ्युपपन्नोऽपि स्वचर्योवसितोऽपि सन्। क्रियावसन्नो वादेनु परसभ्यावधारणमिति॥

क्रियावादी । त्रि । प्रमाणशादिनि ॥ कार्यवादिनि। मुकाद्दफर्यादीइति चभाषा॥

क्रियासमभिहार । पु । पौन पुन्ये ॥ भृशार्थे ॥ क्रियायाह् क्रियाविशेषाणांसमभिहार समुच्चय ॥

क्रियासाधनम् । न। ज्ञाने॥ द्रव्ये॥ ज्ञानद्रव्याणां सम्यक्ता कृतः क्रियापचार॥

क्रियेन्द्रियम्। न। कर्मेन्द्रिये॥ क्रियासाधक मिन्द्रियम्॥

क्रीड । पु । परीहासे॥ इतिशब्दरत्नावली॥

क्रीडनम्। न। खेलायाम्॥

क्रीडनकम् । न। क्रीडासाधने । खिलौना इति भाषा॥ तेमय्यपेताऽखिलचापलेऽर्भके दान्ते ऽधृतक्रीडनके ऽनुवर्त्तिनि । इति भागवतम्॥ पुंसिक्रोऽपि यथा। इष्टात्मजयिनोव्ययान् नृपान्हसति भूरियम्। अहोमा विजिगीषन्ति मृत्योः क्रीडनकानरा इति॥

क्रीडा। स्त्री। खेलायाम्। परीहासे॥ अवज्ञाने। अनादरे॥ केलिप्रकारे॥

क्रीडाताल । पु। तालविशेषे॥ एक एवप्लुतो यत्रक्रीडातालःसकथ्यते। अपरं नियमं विनेतिदामोदरोक्तेः॥

क्रीडायानम् । न। क्रीडारथे । पुष्परथे॥

क्रीडारत्नम्। न। रतौ॥

क्रीडारथः। पुं। क्रीडार्थरथे॥ असौपुष्परथ. क्रीडायानं न समराय यत्॥

क्रीडोपस्करम्। न। क्रीडासाधने॥

क्रीत । त्रि। क्रयकर्मणि। कृतक्रये। मूल्यप्रदानेन गृहीते । क्रीना इ

तिभाषा ॥ दीयमानं न गृह्णाति क्रीतम् पण्यन्तु य क्रयी । सएवा ऽस्य भवेद्दोषो विक्रेतुर्योऽप्रयच्छत. इतिनारद ॥

क्रीतक । पु । द्वादशपुत्रान्तर्गतपुत्र विशेषे ॥ यथा । क्रीणीयात् य स्त्व पत्यार्थं मातापित्रो र्यमन्तिकात् । स क्रीतक सुत स्तस्य सदृशो ऽसदृ शो ऽपिवेति ॥ न । क्रये ॥ विनि मये ॥

क्रीतानुशय. । पु । द्रव्यं क्रीत्वा पश्चा दनुतापे ॥ यथा । क्रीत्वामूल्येन य. पण्यक्रेता न वहुमन्यते । क्रीतानु शयइत्येतद्विवादपदमुच्यते इतिया ज्ञवल्क्य. ॥

क्रुङ् । पु । स्त्री । क्रौञ्चपक्षिणि ॥ क्रु ञ्चति गच्छति । क्रुञ्चकौटिल्याल्पी भावयो । ऋत्विगितिसाधु. ॥

क्रुञ्च । पु । क्रौञ्चखगे ॥ क्रौञ्चगिरौ ॥

क्रुञ्चा । स्त्री । क्रौञ्चविहङ्ग्याम् ॥ अ जादित्वाट्टाप ॥ वीणाभेदे इतिक श्चित् ॥

क्रुञ्ची । स्त्री । वाद्यभेदे ॥

क्रुद्ध । त्रि । उत्पन्नक्रोधे । क्रोधयुक्ते ॥ क्रुद्धमत्तयो. कुतोविवेकः ॥

क्रुध्यत् । त्रि । सञ्जातक्रोधे ॥

क्रुध् । स्त्री । कोपे ॥ क्रुधक्रोधे । सं पदादित्वात्क्विप् ॥

क्रुधा । स्त्री । कोपे । क्रोधे ॥ क्रुध॰ । स॰ क्विप । भागुरिमते टाप् ॥

क्रुश्वा । स्त्री । शृगाले ॥ क्रोशति । क्रु श॰ । शीङ् क्रुशोरित्यादिनाक्वनिप् ॥

क्रुष्टम् । न । रोदने ॥ रावे ॥ क्रुशआ ह्वाने रोदनेच । भावेक्त ॥

क्रूर । त्रि । कठिने ॥ घोरे ॥ नृशंसे ॥ परद्रोहकारिणि ॥ उष्णे ॥ पु । भू ताङ्कुशवृक्षे ॥ रक्तकरवीरे ॥ श्येनप क्षिणि ॥ कङ्कखगे ॥ कृन्तति । कृ तीछेदने । कृतेश्छक्रूचेतिरक् प्र त्ययो धातो क्रूआदेशश्च ॥ न । न क्षत्रविशेषेषु ॥ पूर्वात्रय याम्यम घे उग्रक्रूर कुजस्तथेत्युक्तेः ॥

क्रूरकर्मा । पु । कटुतुम्बीवृक्षे । कटुतु म्बिन्याम् ॥ त्रि । भयानककर्मक र्तरि ॥

क्रूरगन्धः । पु । गन्धके ॥

क्रूरगन्धा । स्त्री । कन्थार्याम् । तीक्ष्ण कण्टकायाम् ॥

क्रूरदृक् । पु । शनैश्चरे ॥ त्रि । पिशुने ॥

क्रूरधूर्तः । पु । कृष्णधत्तूरके ॥

क्रूरप्रसादन. । पु । भक्ते ॥

क्रूरराव़ी । पु । द्रोणकाके ॥

क्रूरलोचन. । पु । शनौ । शनैश्चरे ॥

क्रूरसत्त्व. । पु । आशाढ़ौ ॥

णाम् ॥ विष्णौ । परमात्मनि ॥ प्रत्यु
त्थानप्रश्रयणाभिवादन विधीयते सा
धु मिथ सुमध्यमे । प्रायै परस्मै
पुरुषाय चेतसा गुहाशयायैव नदे
हमानिने ॥ गुहाया शेते । शीङ्० ।
अधिकरणे शेतेरित्यच् ॥

गुहाहित । त्रि । बुद्धिस्थे । गुहायामा
हित ॥

गुहिलम् । न । धने ॥ वने ॥ गूहति
गूहते वा । गुहू० । गुपादिभ्य किदि
तीलच् ॥

गुहेर । पु । गोप्तरि ॥ लौहकारे ॥
गूहति गूहते वा । गुहू० । मूलेराद
यश्चेत्येरक् ॥

गुह्य । पु । कमठे ॥ दम्भे ॥ परमात्म
नि । विष्णौ ॥ रहस्योपनिषद्वेद्यत्वा
त् गुहाया बुद्धौ हृदयाकाशे वा नि
हित इति वा गुह्य । गुहामर्हति
। दण्डादिभ्यश्चेतियत् ॥ न । रहसि ॥
उपस्थे । भगलिङ्गयो ॥ गुदे ॥ त्रि ।
रहस्ये । गोप्ये । यस्मै कस्मै चिदवक्त
मनर्हे ॥ निर्जने ॥ गुहानिवासिनि ॥
गूहनम् गुह्यते वा । गुहू० । प्रसिद्ध
त्वीतिक्यप् ॥

गुह्यक । पु । देवयोनिविशेषे । कुबे
रनिधिरक्षके मणिभद्रादौ ॥ गूह
ति निधिरक्षति । गुहू० । ण्वुल् ।
पृषोदरादित्वाद्यगागम ॥ निधि रक्ष
न्ति ये यक्षास्ते स्युर्गुह्यकसञ्ज्ञका इति
व्याडि ॥ यद्वा । गुह्यं कुत्सितकायास
। कैशब्दे । आतइतिक ॥ गुह्यगोपनी
य क सुख यस्य ति वा । अनयो पञ्च
यो प्रसिद्धिः गुह्यिभ्योवेतिकाशिको
क्तो क्यप् ॥ गूंझा इति प्रसिद्धे पक्वान्ने ।
तस्य प्रकार । समितां सर्पिषा भृष्टां
सिताद्राक्षादिसम्भृताम् । एलालवङ्ग
कर्पूरमरीचपरिवासिताम् ॥ क्षिप्
त्वान्यसमितालम्बपुटे वेष्टयेद्धृते प
चेत् । तत खण्डेन्यसेत् पक्वे गुह्य
कोऽय मुदाहृत ॥ गुह्यको बृंहणो
हृद्यो हृष्य पित्तानिलापह । मधु
रोऽतिगुरु पाके किञ्चित् सन्धान
कृत्सर ॥

गुह्यकलोक । पु । पिशाचलोकादुप
रि गन्धर्वलोकादधो वर्त्तमाने भुवने ॥

गुह्यकाली । स्त्री । देवीविशेषे ॥ ने
पालस्थेतत्स्थाने ॥

गुह्यकेश्वर । पु । मनुष्यधर्मणि । कुबे
रे ॥ गुह्यकायन्तीतिगुह्यका । तेषा
मीश्वर ॥

गुह्यगुरु । पु । शिवे ॥

गुह्यदीपक । पु । खद्योते ॥

गुह्यनिष्यन्द । पु । मूत्रे ॥

गुह्यपुष्प । पु । अश्वत्थवृक्षे ॥

गुह्यभाषितम् । न । मन्त्रे ॥ गुह्यमाख्यं ॥ गुह्यमनलं भाषितञ्च ॥

गुह्यबीजः । पु । भूतृणे ॥

गुह्याष्टकम् । न । भारभूत्यादिषु ॥ तेच यथा । भारभूत्याषाढिडिण्डिखा ऽऽम्रातकपुष्करा । प्रभासनैमिषे ऽके तिगुह्याष्टकमिहोच्यते ॥ इति म मेन्द्रसंहिता ॥

गूः । स्त्री । मले । विष्ठायाम् ॥ गच्छति । गम्° । क्विप् । गमः क्वौ । इति वार्त्तिकेन मलोपो ऽकारस्य ऊकारादेशः ॥

गूढम् । न । रहसि ॥ गुह्ये ॥ त्रि । अप्रकटे । गुप्ते । संवृते ॥ प्रच्छन्ने । कुर्विमेचने ॥ गुह्यते स्म । गुह्° । क्तः । यस्यविभाषेतीडभावः ॥

गूढजः । पु । गूढोत्पन्नपुत्रे ॥

गूढनीडः । पु । खञ्जनखगे ॥

गूढपत्रः । पु । करीरे ॥ अङ्कोठे ॥

गूढपथः । पु । अन्तःकरणे ॥ गुप्तवर्त्मनि ॥

गूढपात् । पु । सर्पे ॥ गूढा पादा अस्य । पृषोदरादिः ॥ यद्वा । गूढं पादयति । पदगतौ । ण्यन्तात् क्विप् ॥

गूढपादः । पु । सर्पे ॥ गूढा सन्तता पादा अस्य । पादाभावा अपि शिशवे दृश्यन्ते दे च विंशती इत्यागमः ॥

गूढपुरुषः । पु । प्रणिधौ । राजचारे ॥ गूढश्चासौ पुरुषश्च ॥

गूढपुष्पकः । पुं । अश्वत्थपादपे ॥

गूढफलः । पु । बदरे ॥

गूढमार्गः । पु । भूमध्यमार्गे । सुरङ्गायाम् । सुरङ्ग इति भाषा ॥ गूढश्चासौ मार्गश्च ॥

गूढमैथुनः । पु । काके ॥ गूढं मैथुनमस्य ॥

गूढवर्चाः । पु । दर्दुरे ॥ गूढं वर्चोऽस्य ॥

गूढवल्लिका । स्त्री । अङ्कोठवृक्षे ॥

गूढसाक्षी । त्रि । योऽर्थिना गूढतया प्रत्यर्थिवचनं श्रावितः सः ॥ तथाच नारदः । अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम् । यः श्राव्यते तदा गूढो गूढसाक्षी स उच्यते । इति ॥

गूढाङ्गः । पुं । कच्छपे ॥

गूढाङ्घ्रिः । पु । सर्पे ॥

गूढोत्पन्नः । पु । पुत्रविशेषे ॥ यथा । उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः । स गृहे गूढउत्पन्नस्तस्य स्यात् यस्यतल्पजः ॥

गूथः । पु । न । मले । मकृति ॥ गूयते । गु पुरीषोत्सर्गे वा । तिथपृष्ठगूथेतिसाधु ॥

गूथकः । पु । ग्रामस्थे । कुक्कुटे । गुये सालिक इति गौड़भाषा ॥ सि

द्रे खगे ॥

गूनः । त्रि । कृतपुरीषोत्सर्गे । हन्ने ॥ गूयते स्म । गू० । क्तः । दुग्वोर्दीर्घश्चेति नत्वम् ॥

गूरणम् । न । उद्यमे ॥

गूवाकः । पु । क्रमुके । गुवाके ॥ गुवन्त्यनेन । गु० । पिना० साधु ॥

गूषणा । स्त्री । मेचके । मयूरपिच्छचक्र ॥

गृञ्जन । पु । लसुन इति प्रसिद्धे रसोनके ॥ रक्तलशुने ॥ इति राजनिर्घण्टः ॥ न । विषदिग्धपशोर्मांसे ॥ सालगम इति प्रसिद्धे कन्दे । शिखिमूले । वर्त्तुले । यवनेष्टे ॥ गृञ्जनः पित्तलो ग्राही तीक्ष्णोष्णो रोगनाशनः । गन्धाकृतिरसैस्तुल्य स्सूक्ष्म मात्र पलाण्डुना ॥ गृञ्ज्यते भक्ष्यत्वेन कथ्यते रोगेषु । गृजिशब्दे । कर्मणिल्युट् ॥

गृडीव । पु । लोपाके । पृथुशृगाले । बड़ा मोटा सियार इतिभाषा ॥ इतिहेमचन्द्र ॥

गृत्सः । पु । कन्दर्पे ॥ गृध्यति । गृधु अभिकाङ्क्षायाम् । गृधिपण्योर्दकौ चेति स । धातोर्दान्तादेश ॥

गृत्समद । पु । ऋषिविशेष ॥

गृधि । स्त्री । मत्स्यभिलाषे ॥

गृधु । पुं । कामदेवे ॥ गृध्यति । गृधु० । पृभिदिव्यधिगृधिधृषिभ्यः-ति कुः ॥

गृध्नु । त्रि । लुब्धे ॥ गर्द्धनशील । गृधु० । त्रसिगृधिधृषीति क्नुः । नेड्वशि कृतीतीट्निषेध ॥

गृध्नुता । स्त्री । लुब्धत्वे । रागे । सङ्गे ॥

गृध्र । पु । दाक्षाय्ये । वज्रतुण्डे । परमांसभक्षणाभिकाङ्क्षिणि खगे । गीध इति भाषा ॥ आसन्नमृत्यो र्निपतन्ति गृध्राद्यो मूर्द्धि गृहोर्द्धभागे ॥ त्रि । लुब्धके ॥ गृध्यति । गृधु० । सुसूधागृधिभ्य क्रन् ॥

गृध्रकूट । पु । मगधदेशस्थसीमाशैले ॥

गृध्रनखी । स्त्री । कोलिवृक्षे । बदरीम् ॥ कालियाकड़ा इति गौड़भाषाप्रसिद्धे कुब्जकवृक्षे ॥ छिन्नायाम् । हींस इति भाषाप्रसिद्धे वृक्षे ॥

गृध्रपत्रा । स्त्री । धूम्रपत्रावृक्षे ॥

गृध्रराज । पु । जटायुपक्षिणि ॥

गृध्रसी । स्त्री । ऊरुसन्धौ वातरोगविशेषे ॥ स० यथा । स्फिक्पायूरुकटिपृष्ठजानुजङ्घापद क्रमात् । गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः ॥ वाताद्वातकफात्तन्द्रागौरवाऽरोचकान्विता । इति ॥ गृध्रमपि स्यति । षो अन्तकर्मणि । आतइति कः । गौरा-

दिश्याम् ङीष् ॥

गृहि । स्त्री । सङ्कुतप्रसृतायां गवि ॥ वराहक्रान्तायाम् ॥ बदरायामोषधौ ॥ काश्मर्याम् ॥ गृह्णाति । ग्रह उपादाने । क्विप् । पृषोदरादिः ॥ सङ्कुतप्रसृतायाम् ॥ अतएव गृष्ट्यास्तुल्यत्वेपि गृष्ट्यादिभ्यश्चेत्यत्र पुनर्ग्रहणकृतम् ॥

गृहम् । न । इष्टकादिरचिते वासस्थाने । गेहे । उदवसिते । वेश्मनि । घर इति भाषा ॥ गृह्णाति धान्यादिकम् । ग्रह० । गेहेक. ॥ यद्वा । गृहू ग्रहणे । गर्हते । इगुपधेतिक. ॥ कलत्रे । भार्यायाम् । दारपरिग्रहश्चाश्रमे श्रौतस्मार्तयोरन्यतराग्निनिषेविते सर्वकर्मसम्पादके त्रिवर्गकारणे ॥ न गृहं गृहमित्याहु गृहिणी गृहमुच्यते । तया हि सहित. सर्वान् पुरुषार्थान् समश्नुते ॥ नामनि ॥ भवने । राशौ ॥ चतुर्थभवने ॥ गृह्णाति पुरुषं यस्माद्गृहं तेन प्रकीर्त्तितम् ॥ अत्राहव्यास । न गृहं बन्धनागारं बन्धनेन च कारणम् । मनसा यो विनिर्मुक्तो गृहस्थोपि विमुच्यत इति ॥ नहि जड गृहं पुरुष बध्नाति नचान्यद्बन्धने कारणमस्ति किन्तु मनस आसक्तिमात्रं कारणं तां विहाय संसारं कुर्वाणो मुच्यत एवेत्यर्थ ॥



गृहा. । पुभूम्नि । कलत्रे । दारेषु ॥ तात्स्थ्यात् । भवतिहि तात्स्थ्यात्ताच्छब्द्यम् । अन्या क्रोशन्तीत्यादै। अन्यशब्देन पुरुषाश्रयिण्यपदिश्यन्ते । एवञ्च गृहशब्दो वेश्मनि मुख्यो दारेषुत्वौपचारिक. । अचेदमवधेयम् । गृहशब्दोयमर्द्धर्चादित्वादुभयलिङ्ग । तत्र नपुंसकलिङ्गोऽभिधेयवचन. । पुंलिङ्गस्तु बहुवचनान्त एवेति ॥

गृहकच्छप. । पु । पेषणशिलायाम् ॥

गृहकन्या । स्त्री । घृतकुमार्य्याम् ॥

गृहकपोत. । पु । प्रासादकुक्कुटे । भित्तीकपोते । पारावते ॥

गृहकर्त्ता । पु । धूसरेऽतिकृष्णचटके । धान्यभक्षके ॥

गृहकारक । पु । घरामी राज इतिच प्रसिद्धे वर्णसङ्करजातिविशेषे ॥ यथा । प्रतिमाघटकादेव कन्यायां नाभितश्च । सूत्रकारस्य सम्भूति सोपानगृहकारक इति पराशरपद्धति ॥

गृहकारी । पु । कुम्हारी इतिभाषाप्रसिद्धे कीटे ॥

गृहकूलक. । पु । चिचिण्डाख्यशाके ॥

गृहगोधा । स्त्री । विशम्बरायाम् । प-

ल्लिकायाम। छिपकली बिस्तुय्याइति भाषा ॥

गृहगोधिका । स्त्री । मुषल्याम् । गृह गोधायाम् ॥ अल्पागोधा । अल्पार्थे कम् । गृहस्यगोधिका ॥

गृहगोलिका । स्त्री । पल्ल्याम् ॥

गृहजात । पुं । दास्यामुत्पन्ने दासविशेषे ॥

गृहणी । स्त्री । काञ्जिके ॥

गृहतटी । स्त्री । वीथ्याम् ॥ इतिहारावली ॥

गृहद्रुम । पु । मेषशृङ्गीवृक्षे ॥

गृहधूप । पु । गेहधूमे ॥

गृहनाशन: । पुं । वनकपोते । चित्रकाष्ठे । घुघुती पिण्डुकिया इतिचभाषा ॥

गृहनीड । पु । चटके ॥

गृहपङ्क्ति । स्त्री । एकजनावासपङ्क्तौ । जिसे अववारिक कहते ॥

गृहपति । पु । गृहस्थे ॥ सत्रिणि । सदान्नदानकर्त्तरि गृहस्थे ॥ मन्त्रिविशेषे ॥ धर्मे ॥ गृहस्यपति ॥ स्त्री । गृहपत्न्याम् ॥ विभाषासपूर्वस्येतिपाक्षिकीनन्ताभाव ॥

गृहपाश । पु । मुनि ॥ गृहपाशेयति । पाशरज्जवो । कर्मण्यण् ॥

गृहपोतक । पु । वास्तौ । हवेली घर इति चभाषा ॥ इतिशब्दरत्ना-वली ॥

गृहप्रवेश । पुं । गृहान्तर्गमने ॥

गृहबभ्रु । पु । गेहनकुले ॥

गृहबलिप्रिय: । पु । बकपक्षिणि ॥

गृहबलिभुक् । पुं । चटके ॥ काके ॥ बके ॥

गृहभूमि । स्त्री । वास्तौ । वेश्मभुवि ॥

गृहमणि । पु । दीपे ॥

गृहमाचिका । स्त्री । चर्मचट्याम् । अजिनपत्रायाम् । चाम चिरय्या इति भाषा ॥

गृहमृग: । पुं । कुकुरे ॥

गृहमेधी । पु । कृतदारपरिग्रहे । गृहस्थे ॥ गृहै दारै र्मेधते सङ्गच्छते । मेधृसङ्गमेच । सुप्यजातौणिनि ॥

गृहमेधिनी । स्त्री । सात्त्विकायांबुद्धौ ॥ गृहस्थपत्न्याम् ॥

गृहमेधीयम् । न । गृहमेध्ये ॥ गृहमेधो देवतास्य । द्यावापृथिवीतिछ: ॥

गृहमेधीय । पु । गृहाश्रमविहितेकर्म्मादौ ॥

गृहमेध्यम् । न । गृहमेधीये ॥ गृहमेधो देवतास्य । द्यावापृथिवीतियत् ॥

गृहयाय्य । पु । गृहस्वामिनि ॥ गृहयतेर्गृहयति । श्रुदृच्चिस्पृहिगृहिभ्य आय्य: ॥

गृहयालुः । पु । गृहीतरि । ग्रहणशीले ॥ गृह्यते तच्छील । गृह॰यु॰ । स्पृहिगृहिपतीत्यालुच् । अयामन्तेतिणेरयादेश ॥

गृहवाटिका । स्त्री । गृहान्तिककुलारामे ॥

गृहसंवेशक । पु । गृहसन्निवेशोपदेशके । वास्तुविद्योपजीविनि ॥

गृहस्थ । पु । गृहिणि । गृहपतै । ज्येष्ठाश्रमिणि । द्वितीयाश्रमिणि ॥ न्यायार्जितधन स्तत्व ज्ञाननिष्ठोऽतिथिप्रिय. । श्राद्धकृत् सत्यवादी च गृहस्थोऽपिविमुच्यते ॥ गृहशब्दस्य दारवचनत्वात् कृतदारपरिग्रहोगृहस्थ । गृहेतिष्ठति । ष्ठा॰ । सुपिस्थइतिक. ॥

गृहस्थूणम् । न । गृहस्तम्भे ॥ गृहस्य स्थूणा ॥

गृहाक्ष । पु । वातायने ॥

गृहागत. । पु । अतिथै ॥ त्रि । गेहमायाते ॥

गृहाधिप । पु । गृहस्थे ॥

गृहाम्लम् । न । काञ्जिके ॥

गृहायनिक । पु । गृहिणि ॥

गृहाराम । पु । निष्कुटे । गृहोपवने ॥ गृहस्यआराम ॥

गृहाक्षिका । स्त्री । मकुलकायाम् । गृहगोधिकायाम् ॥

गृहावग्रहणी । स्त्री । देहल्याम् ॥ गृहमवगृह्यतेऽनया । ग्रहउपादाने । करणे ल्युट् ॥

गृहाश्रया । स्त्री । ताम्बूल्याम् । नागवल्ल्याम् । पानकी बेल इतिभाषा ॥

गृहाश्मा । पु । मेषशृङ्गिकायाम् । सिल इतिभाषा ॥

गृहासक्त । पु । गृध्रके ॥ त्रि । गृहेआसक्तिविशिष्टे ॥

गृहिणी । स्त्री । भार्यायाम् ॥ इनिमत्वर्थीय । ङीप् । गेहकर्मकुशलायाम् ॥

गृही । पु । गृहस्थे ॥ गृहा दारा सन्त्यस्य । इनि ॥

गृहीत । त्रि । स्वीकृते ॥ज्ञाते ॥ प्राप्ते ॥ धृते ॥ गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥

गृहीतदिक् । त्रि । पलायिते । तिरोहिते ॥

गृहीति । स्त्री । ग्रहणे ॥

गृहीती । स्त्री । गृहीतवति ॥ गृहीतमनेन । इष्टादिभ्यश्चेति कर्त्तरि इनि ॥

गृहेनर्दी । पु । गेहेशूरे ॥

गृहेश । पु । गृहपतै ॥

गृहोक्षिका । स्त्री । पल्याम् ॥

गृह्यः । पु । गृहासक्तमृगपक्षिणोः ॥ गृह्यते । गृह० । पदास्वैरीतिक्यप् ॥ न । मलवर्त्मनि । गुदे ॥ ग्रन्थप्रभेदे । गृह्यसूत्रे ॥ त्रि । अस्वैरिणि ॥ पक्षे ॥ गृह० । ऋदुपधाच्चाक्लृपिचृतेरितिक्यप् ॥ गृहेभवो वा । यत् ॥

गृह्यक । पु । छेके । गृहासक्तपक्षिमृगयोः ॥ त्रि । निघ्ने । आयत्ते ॥ क्य बन्तात् स्वार्थे ऽनुकम्पायां वाकन् ॥

गृह्या । स्त्री । शाखापुरे ॥ इतिमेदिनी । टाप् ॥

गेन्दु । पु । } कन्दुके । गेंद इतिभाषा ॥ गे गमने इन्दुरिव ॥ गे इन्दुरिव प्रतिकृतिर्वा । इवेप्रतिकृताविति कन् ॥ पृषोदरादित्वाद्दीर्घः ॥
गेन्दुक । पु ।
गेन्दूक । पु ।

गेयम् । न । गीते ॥ यथा । गेयगीतानामसहस्रम् ॥ त्रि । गातव्ये ॥ गायने ॥ अर्हेकृत्यतृचश्चेति योग्यतायामचोयत् । ईद्यति । गुण ॥ गायति । गैशब्दे । भव्यगेयेति कर्त्तरिवायत् । गीयते इतिवा ॥

गेष्ण । पु । पर्वणि ॥

गेष्णु । पु । गायने ॥ नटे ॥ गायति । गै० । गादाभ्यामिष्णुच् ॥ सामगानकर्त्तरि ॥

गेहम् । न । उदवसिते । गृहे ॥ गेन गणेशेन ईह्यते काम्यते । ईह० । कर्मणि घञ् ॥ गोगणेशो गन्धर्वो वा ईह ईप्सितोऽस्मिन् वा ॥

गेहधूप । पु । अपराजितधूपे ॥ यथा । मयूरपिच्छं निम्बस्यपत्राणि बृहतीफलम् । मरिचं हिङ्गु मांसी च बीजं कर्पाससम्भवम् ॥ छागरोमा ऽहिनिर्मोको विष्ठा वैडालिकी तथा । गजदन्तस्य तच्चूर्णं किञ्चिद्घृतविमिश्रितम् ॥ गेहेषु धूपनं दत्त सर्वान् बालग्रहान् जयेत् । पिशाचान् राक्षसान् हत्वा सर्वज्वरहरं भवेदिति॥

गेही । पु । गृहिणि ॥

गेहेनर्दी । पु । कापुरुषे । पिण्डीशूरे॥

गेहेशूर । पु । गेहेनर्दिनि ॥ इतिहेमचन्द्र ॥

गैरिकम् । न । रक्तधातौ । गेरू इति भाषा ॥ गैरिकं रक्तधातुः स्याद्गैरेयं गिरिजन्तथा । सुवर्णगैरिकं त्वन्यत् ततो रक्ततरं हि तत् ॥ गैरिकद्वितयं स्निग्धं मधुरं तुवरं हिमम् । चक्षुष्यं दाहपित्तास्रकफहिक्काविषापहम् ॥ स्वर्णे ॥ गिरौ भवम् ॥ अध्यात्मादित्वाट्ठञ् ॥

गैरिकाक्ष । पुं । जलमधूकवृक्षे ॥

गैरी । स्त्री । बाह्लिकोद्भवे ॥

गैरेयम् । न । शिलाजतुनि ॥ गिरौ भव

वम् । नवादिश्चेतिङक् ॥

गो. । पु । बलीवर्दे । अनडुहि ॥ स्वर्गे । रश्मौ ॥ कुलिशे । वज्रे ॥ चन्द्रे ॥ सूर्ये ॥ गोमेधयज्ञे ॥ ऋषभनामौषधे ॥ स्त्री । सौरभेय्याम् । अर्जुन्याम् । उस्रायाम् ॥ गोमांसगुरु सुस्निग्धं पित्तश्लेष्मविवर्द्धनम् । बृंहणं वातहृद्बल्यं अपथ्यं पीनसप्रणुत् ॥ चक्षुषि ॥ वाणे ॥ दिशि ॥ मातरि ॥ वाचि ॥ भूमौ ॥ वृषराशौ ॥ नवाङ्के ॥ गच्छति गम्यते वा ऽनेन वा । गम्॰ । गमेर्डोः ॥

गाव । पुभूम्नि । उदके । जले ॥

गोकण्टक । पु । गोक्षुरके ॥ स्थपुटे । विषमोन्नते ॥ गोक्षुरे स्थपुटीकृते इति हेमचन्द्रः ॥ गवां खुरे ॥ विकङ्कतवृक्षे ॥ गोर्भूमेः पृथिव्या वा कण्टकः ॥

गोकर्ण । पुं । अश्वतरे ॥ सर्पे ॥ गौः कर्णोयस्य । गोश्चक्षुः चक्षुः परत्वात् गोकर्णः सर्पः ॥ सारङ्गे । मृगविशेषे ॥ गोरिवकर्णोयस्य ॥ गणदेवताविशेषे ॥ अङ्गुष्ठानामिकोन्माने । अनामिकायुक्तविस्तृताङ्गुष्ठे ॥ गोः कर्णइव ॥ शिवलिङ्गविशेषे ॥ यथा । महाबलस्य गोकर्णेत्रिषभद्रार्चचलिङ्गकेच्छागम. । गोकर्णे भद्रकर्णीत्यादि-तिदेवीगीता ॥

गोकर्णी । स्त्री । मूर्वालतायाम् ॥ गो. कर्णइव । गौ. कर्णोयस्या वा ॥ पाककर्णेतिङीष् ॥

गोकिराटिका । स्त्री । विट्सारिकायाम् ॥

गोकिराटी । स्त्री । सारिकाख्यखगे ॥

गोकिल. । पु । मुसले ॥ हले ॥

गोकील' । पु । मुषले ॥ लाङ्गले ॥

गोकुलम् । न । गोसमूहे । गोधने ॥ गोस्थाने ॥ यथा । गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः । अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च ॥ व्रजेप्रसिद्धेनन्दावासे ॥ समीकुलम् ॥

गोकुलिक. । पु । कैकरे । वक्रिते ॥ पङ्कस्थगव्युपेक्षके ॥

गोकृतम् । न । गोमये ॥ त्रि । गोभिः चरिते ॥

गोक्षुर' । पु । गोक्षुरके ॥ गोक्षुर. शीतल. स्वादुर्बलकृद्बस्तिशोधनः । मधुरो दीपनो वृष्यः पुष्टिदश्चाश्मरीहर ॥ प्रमेहश्वासकासार्शः कृच्छ्रहृद्रोगवातनुत् ॥ क्षुरति । क्षुर विलेखने । इगुपधज्ञाप्रीकिरः कः । गोर्गोर्वाक्षुर. ॥

गोक्षुरक. । पु । गोक्षुर इतिभाषायाम्

सिद्धार्थपत्रकषायाम् । स्वादुकण्टके ॥ गोर्गवां क्षुर: ॥ स्वार्थेकन् ॥

गोखुर । पु । गोक्षुरे ॥ न । गवांशफे ॥

गोगोयुगम् । न । गोद्वये ॥ द्वौगावौ । द्विरूवेगोयुगच् ॥

गोगोष्ठम् । न । गवांस्थाने ॥ गोष्ठजादय: स्थानादिषु पशुनामभ्य: ॥

गोग्रन्थि । पु । करीषे ॥ गोष्ठे ॥ गोजिह्विकौषधौ ॥

गोघृतम् । न । गव्येघृते ॥ वर्षणे ॥

गोघ्न । पु । अतिथौ ॥ त्रि । गोघातके ॥

गोचर । पुं । इन्द्रियार्थे । रूपशब्दगन्धरसस्पर्शस्वरूपे ॥ प्रयुज्यतेहि । उपादानगोचरज्ञानमिति ॥ देशे । गवांअधिस्थाने । वने ॥ तथाचभारवि । उपारता: पश्चिमरात्रिगोचरादिति ॥ जन्मराश्यवधिग्रहचक्रस्यराशिषु ॥ गावइन्द्रियाणि चरन्त्यस्मिन् । गोचरसञ्चरेतिनिपातित ॥ त्रि । गोगामिनि ॥

गोचरफलम् । न । जन्मराशे सकाशात् ग्रहाणां सञ्चारवशेन शुभ शुभफले ॥ गोचरशुद्धिर्यथा । केतूपग्रहभौमजमन्दगतय: षष्ठत्रिसस्था शुभा अच्छ्राकावपि तेचतौच दशमौ चन्द्र पुन: सप्तम: । जीव: सप्तनवद्विपञ्चमगतो युग्मेषु सोमात्मज शुक्र: षड्दशसप्तवर्ज्जमितरे सर्वेष्युपान्ते शुभा इति ॥

गोचर्म्म । न । गोस्त्वचि ॥ परिमाणविशेषे ॥ सप्तहस्तेन दण्डेन त्रिंशद्दण्डैर्निवर्त्तनम् । दशतान्येव गोचर्म्म दत्वा स्वर्गे महीयतइति बृहस्पति: ॥ यत् किञ्चित् कुरुते पाप ज्ञानतोऽज्ञानतोऽपिवा । अपि गोचर्म्ममात्रेण भूमिदानेन शुद्ध्यतीत्याचारे मिताक्षरा ॥

गोची । स्त्री । हिमालयपत्न्याम् ॥ गाव स्तुतिरूपा श्रुतिस्मृतीतिहासपुराणादिसम्बन्धिनी महादेवविषयिणी वाच अञ्चति पूजयति यद्वा गच्छति प्राप्नोति तात्पर्यरूपेण शृणोति । अञ्चु० । क्विप् । ङीप् ॥

गोछाग । पु । भूकदम्बे । कोकशिमा इति गौडभाषा ॥

गोजर: । पु । वृद्धवलीवर्द्दे ॥

गोजलम् । न । गोमूत्रे ॥

गोजा । स्त्री । गोलोमिकायाम् ॥ पृथिव्यां व्रीहियवादिरूपेणोत्पन्नायाम् ॥ गोषु जायते । जनी० । जनसनेति विट् । विड्वनोरित्यात्वम् ॥

गोजागरिक । पु । भव्यकारके ॥ न । मङ्गले ॥

गोजापर्णी । स्त्री । क्षुद्रक्षुपविशेषे । दुग्धफेनीवृक्षे । शब्दकेतुघ्न्याम् ॥ गोजिह्वा । स्त्री । दार्विकायाम् । गोजियालता दारियाशाक इतिचगौडभाषा ॥ गोजिह्वा वातला शीता ग्राहिणी कफपित्तनुत् । हृद्याप्रमेहकासास्रव्रणज्वरहरी लघु ॥ कोमला तुवरा तिक्ता स्वादुपाकरसा स्मृता ॥ पत्रशाकस्य तु गुणाः । गोजिह्वा कुष्ठमेहास्रकृच्छ्रज्वरहरी लघु ॥ गोजिह्वेव ॥

गोजिह्विका । स्त्री । गोजिह्वालतायाम् ॥ गोजिह्वेव । कन ॥

गोडिम्ब । पु । शृगालजम्ब्वाम् ॥

गोडुम्ब । पु । शीर्षद्वन्ते । तरमूज इति भाषा ॥

गोडुम्बा । स्त्री । गवादन्याम् । चित्राख्यकर्कट्याम् । गोमुक इतिगौडभाषा ॥ गांभुवं तुम्बति । तुम्बिअर्दने । मूलक । पृषोदरादि. ॥

गोडुम्बिका । स्त्री । गोडुम्बायाम् ॥

गोणी । स्त्री । धान्याधारे गूण इतिभाषाप्रसिद्धे आवपने ॥ गोणशब्दादावपनेर्थे जानपदकुण्डगोणेतिङीष् ॥ छिद्रवस्त्रे । शाण्याम् ॥ धान्यमानभेदे ॥ द्विशूर्पोमोणुदाहृता तामेव भारंजानीयादित्युक्तः ॥ द्रोणीपरिमाणमिति वैद्यकपरिभाषा ॥

गोणीतरी । स्त्री । ह्रस्वगोण्याम् ॥ ह्रस्वागोणी । कासूगोंणीभ्यांष्टरच् । षित्त्वात् ङीष् ॥

गोण्ड । पु । पामरजातौ ॥ वृद्धनाभौ । नाभिगुडके ॥ त्रि । दृढनाभिवति ॥ गो अण्ड इत्र ॥

गोतम । पु । ब्रह्मण्य पुत्रे गौतममुनौ ॥

गोतमान्वय । पु । शाक्यमुनौ ॥

गोतीर्थम् । न । गोष्ठे ॥

गोत्र । पु । अद्रौ । पर्वते ॥ न । आख्यायाम् । नामनि ॥ सम्भावनीयबोधे ॥ कानने ॥ क्षेत्रे ॥ वर्त्मनि ॥ छत्रे ॥ सजातीयगणे ॥ पूर्वाचार्याणांमतेनाऽपत्ये ॥ कुले । अभिजने । ऋषिशब्दवाच्ये आदिपुरुषे स्वसन्तानसमाकारिणि ब्राह्मणरूपे ॥ क्षत्रियवैश्ययो रुपदिष्टातिदिष्टगोत्रम् । शूद्रस्यातिदिष्टातिदिष्टगोत्रम् । यथा । न समानगोत्रां भार्यां विन्देतेत्यनेन शूद्रस्यापि सगोत्रा कथं न निषिध्यते इतिचेत् अत्रोपदिष्टातिदिष्टगोत्रस्यैवनिषेधो नत्वतिदिष्टातिदिष्टशूद्रगोत्रादेरितिनिर्णय.॥ क्षत्रियवैश्यशूद्राणा मतिदिष्टातिदिष्टगोत्रप्रवरम् अतएवैतेषांपुरोहितगोत्रप्रवरमित्यर्थः । तथाचाग्निपुराणे

वर्णसङ्करोपाख्याने । क्षत्रियवैश्यशूद्राणां गोत्रञ्च प्रवरादिकम् । तथा न्यवर्णसङ्कराणां येषां विप्राश्च याजकाइति ॥ गोत्राणितुचतुर्विंशति । तथाचमनुः । शाण्डिल्य काश्यपश्चैव वात्स्य सावर्णक स्तथा । भरद्वाजो गौतमश्च सौकालीन स्तथापरः ॥ कल्किष श्चाग्निवेश्यश्च कृष्णात्रेयव शिष्ठकौ । विश्वामित्र कुशिकश्च कौशिक श्चतथापरः ॥ घृतकौशिकमौ द्गल्यौ आलम्यानः पराशरः । सौपायन स्तथाऽत्रिश्च वासुकी रोहितस्तथा ॥ वैयाघ्रपद्यकश्चैव जामदग्न्य स्तथापरः । चतुर्विंशति गोत्राणां कथितापूर्वपण्डितैः ॥ अपिचमनुः । जमदग्नि भरद्वाजो विश्वामित्रात्रिगौतमाः । वशिष्ठकाश्यपागस्त्या मुनयो गोत्रकारिणः ॥ एतेषां यान्यपत्यानि तानिगोत्राणिमन्वते । एतदुपलक्षण मन्येषामपि दर्शनात् । तथाच । सौकालीनकमौद्गल्यौ पराशरबृहस्पती । काश्यनोविष्णुकौशिकौ कात्यायनात्रेयकाण्वका ॥ कृष्णात्रेय साङ्कृतिश्च कौण्डिन्यो गर्गसञ्ज्ञकः । आङ्गिरसइति ख्यात अनादिकाख्यसञ्ज्ञितः ॥ अव्य जैमिनिरुद्दाख्या. शाण्डिल्यो वात्स्य एवच ॥ सावर्णोऽलम्यानवैयाघ्रपद्याश्च घृतकौशिक ॥ शक्तिः कात्यायनश्चैव वासुकीगौतम स्तथा । शुनक सौपायनश्च मुनयो गोत्रकारिणः ॥ एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते । सर्वेदिक्चत्वारिंशद्गोत्रा ॥ इतिवनञ्जयकूलधर्मप्रदीपः ॥ गूयते शब्द्यते स्वसन्तानप्रभवोऽनेन । गुङ्शब्दे । ष्ट्रन् । गुधृवीपचीत्यादिनात्रो वा ॥ गां त्रायते वा । त्रैङ्पालने । आतोनुपसर्गे इति कः ॥

गोत्रजः । त्रि । गोत्रोत्पन्ने ॥ सतु जन्मनामस्मृतिपर्यन्तसमशौदकभावात् पश्चाद्भवति ॥

गोत्रभिद् । पुं । इन्द्रे । शक्रे ॥ गोत्रान् गिरीन् भिनत्ति । भिदिर्० । 'सत् सूद्विषेति भिदे क्विप् ॥

गोत्रवृक्ष । पु । धन्वनवृक्षे ॥

गोत्रसम्भव । पु । पक्षिविशेषे ॥

गोत्रस्खलनम् । न । अन्यस्त्रीनाम ग्रहणे ॥ यथा । गोत्रस्खलने भ्रान्ति मानिनिजानीहि केवलां मेऽच । व्याख्यानतो विशेषप्रतिपत्ति पाणिनीयइवेति ॥

गोत्रा । स्त्री । कौ । पृथिव्याम् ॥ गोत्राः शैला सन्त्यस्याम् । अर्शआद्यच् ॥ गाः जलानि त्रायते वा । त्रैङ्० । कः ।

टाप् ॥ गव्यायाम् । गवांगणे ॥ गवां समूह । इनित्रकव्यश्चेति च ॥
गोद । पु । मस्तिष्के ॥ चि । गोप्रदे ॥ गां ददाति । इदाम्० । आतश्चेति कः ॥
गोदन्तम् । न । नटमण्डने । हरिताले ॥ पु । गोदन्ते ॥
गोदा । स्त्री । गोदावर्यां नद्याम् ॥
गोदानम् । न । व्रतविशेषे । केशान्ते ॥ गावः केशा दीयन्ते खण्ड्यन्तेऽस्मिन् । इदाम्० । कर्मणि ल्युट ॥
गोदारणम् । न । हले ॥ कुद्दाले ॥ गां भूमिं दारयति । दृविदारणे । ल्युट् ॥ गौर्भूमिर्दार्यतेऽनेन । करणेल्युड्वा ॥
गोदावरी । स्त्री । नदीविशेषे । गौतमसम्भवायाम् । ब्रह्माद्रिजातायाम् ॥
गोदुग्धम् । न । गोः क्षीरे ॥ अस्यगुणा । गव्यं दुग्धं विशेषेण मधुररसपाकयोः । शीतलं स्तन्यकृत् स्निग्ध वातपित्तास्रनाशनम् ॥ दोषधातुमलस्रोत किञ्चित् क्लेदकरं गुरु । जरासमस्तरोगाणां शान्तिकृत् सेवितं सदा ॥ * ॥ कृष्णाया गोर्भवं दुग्धं वातहारिगुणाधिकम् । पीताया हरते पित्तं तथा वात हरं भवेत् ॥ श्लेष्मलं गुरु शुक्लाया रक्ताचित्राच वातहृत् । बाखवत्सविवत्सानां गवां दुग्धं त्रिदोषहृत् ॥ वष्कयिण्या स्त्रिदोषघ्नं तर्पणं बलकृत् पयः । आङ्गलानूपशैलेषु चरन्तीनां यथोत्तरम् । पयो गुरुतरं स्नेहो यथाहारं प्रवर्त्तते ॥ अल्पतृणभक्षणाज्जातं क्षीरं गुरु कफप्रदम् । तत्तु बल्यं परं वृष्यं स्वस्थानां गुणदायकम् ॥ पलालतृणकार्पासबीजजं रोगिणो हितम् ॥ * ॥ अपिचाह राजनिर्घण्टः । गवां प्रत्यूषसि क्षीरं गुरुविष्टम्भि दुर्जरम् । तस्मा दभ्युदिते सूर्ये यामं यामार्द्धमेववा ॥ समुत्तार्य पयो ग्राह्यं तत पथ्यं दीपनं लघु । विवत्सावालवत्सानां पयो दोषलमीरितम् ॥ अस्तु वत्सैकवर्णायाध वलीकृष्णायोरपि । इत्याद्या माषपर्णाद्या ऊर्द्ध्वशृङ्गी च या भवेत् ॥ तासां गवां हितं क्षीरं शृतं वाऽशृतमेव वा । गवां सितानां वातघ्नं कृष्णानां पित्तनाशनम् ॥ श्लेष्मघ्नं रक्तवर्णानां त्रीन् हन्ति कपिलापयः ॥ इति ॥
गोदुग्धदा । स्त्री । चणिकाख्ये सुनीलायाम् ॥
गोधुक् । पु । गोपे । गोदोग्धरि ॥ गां दोग्धि । दुह प्रपूरणे । सत्सूद्विषेतिक्किप् ॥

गोदुह । पुं । गोदुहि । गोपे ॥ गां दोग्धि । दुह० । मू० क ॥

गोदोहनम् । न । गवां दोहनस्थाने ॥ गावोदुह्यन्ते ऽस्मिन् । ल्युट ॥ कालविशेषे । मुहूर्त्ताऽष्टमभागे ॥ यथा। आचम्य च ततःकुर्यात् प्राज्ञो द्वारावलोकनम् । मुहूर्त्तस्याष्टम भागमुद्दीच्योह्यतिथिर्भवेत्इति ॥

गोदोहनी । स्त्री । गोदोहनपात्रे । पात्र्याम् ॥ गौर्दुह्यते यस्याम् । दुहेः करणाधिकरणयोश्चेतिल्युट् ।ङीप्॥

गोद्रुम । पु । गोमूत्रे ॥

गोधन । पु। स्थूलाग्रवाणे । तुक्का इति भाषा ॥ इतिहरिवंश ॥ न । गोसमूहे । गोकुले ॥ गवांधन समूह ॥

गोधा । स्त्री । तलायाम् । ज्याघात वारणे । धनुर्गुणाघातवारणाय प्रकोष्ठतआवद्धायां चर्मपट्याम् ॥ निहाकायाम् । गोधिकायाम । गोह इति भाषा ॥ अस्या मांसपाकविधि' । गोधा च्चोष्णजलेर्भूय चालितां त्वचम कृताम् । स्विन्नाञ्च तक्रतोयाभ्यां चालितां खण्डखण्डिताम् ॥ तथैव दृवैसवाराद्ये प्रलेहो वा विधानतः ॥ विपाके मधुरा गोधा वातपित्तप्रशामिनी । कषाया कटुका प्रोक्ता कफघ्नी बलवर्द्धनी ॥ सा तु स्वल्प जनभेदाद्द्विधेति व्याख्यातार ॥ गुध्यते बाहुर्यया । गुधपरिवेष्टने । हलश्चेतिघञ् ॥

गोधापदिका । स्त्री । गोधापदीलताम् । गोयाखिया इति गौड भाषा॥

गोधापदी । स्त्री । सुवहायाम् । गोधापदिकायाम् ॥ गोधा इवपादोमूलमस्या । कुम्भपदीषुचेति साधु ॥

गोधास्कन्ध. । पु । विट्खदिरे ॥

गोधि । पु । ललाटे ॥ गोधिकायम् ॥ गुध्यते । गुध० । इन ॥ गावो नेत्रेधीयते यस्मिन् । कर्मण्यधिकरणेचेति किर्वा ॥

गोधिका । स्त्री । गोधायाम् । निहाकायाम् ॥ गोहीति प्रसिद्धेजलचरे ॥ गुध्यति । गुध० । ण्वुल् ॥

गोधिकापुत्र । पु । गोधाशावके । गौधेये । सर्पाद्गोधायामुत्पन्ने बम्हनगोह इति प्रसिद्धे जन्तुविशेषे ॥ गुध्यति । गुध० ।ण्वुल् । गोधिकायाः पुत्र' ॥

गोधिनी । स्त्री । वृहतीभेदे । चविकायाम् ॥

गोधुमः । पु । गोधूमे ॥ इति शब्दचन्द्रिका ॥

गोधूम । पु । नागरङ्गे ॥ ओषधीविशेषे ॥ गीहूं इति प्रसिद्धे व्रीहिविशे

गोनन्दी । स्त्री । सारसखगस्त्रियाम् ॥

गोनर्द । पु । सारसखगे ॥ पर्वतविशेषे ॥ न । कैवर्त्तीमुस्तके ॥ गांजलं नर्दयति । नर्द शब्दे । कर्मण्यण् ॥

गोनर्दीय । पु । पतञ्जलिमुनौ । गोनर्दे ॥ गोमर्द्दंभव । इत्याच्छ ॥

गोनस । पु । सर्पविशेषे । तिलित्से । मण्डलीबोडे ॥ गोरिव नासिका अस्य । अच्नासिकाया इत्यच् नसादेशश्च ॥ वैक्रान्तमणौ ॥

गोनाथ । पु । अनडुहि ॥

गोनाय । पु । गोपाले ॥ गांनयति । णीञ् प्रापणे । कर्मण्यण् ॥

गोनास । पु । गोनसे ॥ गोरिव नासा यस्य ॥ न । वैक्रान्तमणौ ॥

गोनिष्यन्द । पु । गोमूत्रे ॥

गोप । पु । गुवाल इति भाषाप्रसिद्धे सङ्करजातिविशेषे । आभीरे । वल्लवे ॥ मणिबन्ध्यां तन्त्रवायात् गोपजाते श्च सम्भव इति पराशरपद्धति ॥ गोष्ठाध्यक्षे ॥ भूपतौ ॥ ग्रामौघाधिकृते ॥ बोले ॥ चि । रक्षके । उपकारके ॥ गोपायति । गुपूरक्षणे । आयादय आर्द्धधातुकेवा । अच् ॥ गांपातिवा । पारक्षणे । आतोनुपेतक ॥ गोर्जलात् पातिवा । पा० । सुधीतिक ॥

गोपक । पुं । गोपशब्दार्थे ॥ स्वार्थेक ॥

गोपकन्या । स्त्री । आभीरसुतायाम् ॥ शारिवौषधौ ॥

गोपघोण्टा । स्त्री । हस्तिकोलौ । बदरीच्छदायाम् ॥ वदरीसदृशाकारो वृक्ष. क्षुद्रफलो भवेत् । अटव्यामेवसा घोण्टा गोपघोण्टेतिचोच्यते ॥ विकङ्कतवृक्षे ॥

गोपति । पु । शिवे । शम्भौ ॥ षण्डे । साँड इति भाषाप्रसिद्धे वृषे ॥ स्वर्गे ॥ भास्करे ॥ चिदशाधिपे ॥ ऋषभनामौषधौ ॥ गवांपति. ॥ श्रीकृष्णे ॥ गवांपालनात् । गोर्भूमेस्तस्या पतिर्वा ॥

गोपदल । पु । गुवाके ॥

गोपनम् । न । अपलापे ॥ गोपनाद्दीयते सत्वनगुप्तिरन्वर्तविना ॥ रक्षायाम ॥ तेजपात इति भाषाप्रसिद्धे तमालपत्रे ॥

गोपनीय । त्रि । गोपितव्ये । गोप्ये ॥

गोपभद्रम् । न । शालूके ॥

गोपभद्रा । स्त्री । काश्मर्याम ॥

गोपभद्रिका । स्त्री । गम्भार्याम् ॥

गोपवधू । स्त्री । शारिवायाम् ॥ गोपाङ्गनायाम् ॥ गोपीएववधू । स्त्रिया पुंवदित्यादिनापुंवद्भाव. ॥

गोपरस. । पु । बोले । गन्धरसे ॥ गो

पे उत्पत्तौ रसोत्य ॥

गोपवल्ली । स्त्री । मूर्वायाम् ॥ शारिवायाम् ॥ श्यामालतिकायाम् ॥

गोपा । स्त्री । गोपालिकायाम् ॥ श्यामालतायाम् ॥ गोपायति । गुपू० । पचाद्यजन्तात् अजादित्वाट्टाप् इति केचित् ॥ गा पाति । पारक्षणे । आतोनुपसर्गे इति कप्राप्ते । वास रूपन्यायेन आतोमनिन् क्वनिब्वनिपश्चेति चेन विचि अदन्तत्वाभावात् विधेरभावे गोपा' विश्वपावदिति बोध्यम् ॥

गोपानसी । स्त्री । छादनाश्रयदारुविशेषे । वडभ्याम् । कुड्येषु छादनार्थं दत्ते वक्रकाष्ठे ॥ छादनाधारे । पटलाधारवंशपञ्जरे ॥ गोपायति । गुपू० । बाहुलकात् असच् प्रत्यय । अल्लोपय लोपौ ॥ गवां गोभि र्वा पानम् किरणानां ग्रहणम् किरणैर्वा शोषणम् । तत् स्यति निवर्त्तयति । षोन्तकर्मणि । आतोनुपेतिक । गौ० ङी ॥ष्

गोपायित । त्रि । रक्षिते ॥ गोपाय्यते स्म । गुपू० । क्त । आयादयआर्द्धधातुकेवा ॥

गोपाल । पु । नृपे । भूपे ॥ गोपे । गवां पालके ॥ ईशे ॥ श्रीकृष्णे ॥ तन्नाम यथा । अथादृध्याकोपनीवाल्लु-



नकवि रक्षयामोजनेषो ऽमृजस्यो वालो जङ्गाकटीरस्थलकलितरयान् किङ्किणीको मुकुन्द । दोर्भ्यां हैय ङ्गवीन दधद ऽतिविमलं पायसं विश्ववन्द्यो गोगोपीगोपवीतो रुरुनखविलसत्कण्ठभूष श्चिरंव इतितन्त्रसार' ॥ सर्वस्य जगतः पालनात् । विष्णौ ॥ गां भूमिं वेदं तन्मूलं यज्ञादिकंवा । पालयति । गा पालयतिवा । पालरक्षणे । कर्मण्यण् ॥ छगणे । मध्यगुरौ । ऽ । ॥

गोपालक' । पु । शिवे ॥ श्रीकृष्णे ॥ गवांपालके ॥ गोपालएव । स्वार्थेकन् ॥

गोपालकर्कटी । स्त्री । ग्वालकाकडी इति प्रसिद्धे कर्कटीप्रभेदे । क्षुद्रेर्वारौ । क्षुद्रचिर्भिटायाम् ॥

गोपालिका । स्त्री । गोपालकस्त्रियाम् ॥ अत्पुयोगलक्षणोङीषप्राप्त. पालकान्तान्नेति निषिध्यते ॥ कीटविशेषे । महाभीरौ ॥ शारिवायां मोषधौ ॥

गोपाली । स्त्री । गोपालकस्त्र्याम् ॥ गोरक्ष्याम् ॥ गोप्याम् ॥ गोपाली करतालीनर्त्तनशाली पुनातुवनमाली ॥

गोपाष्टमी । स्त्री । गोष्ठाष्टम्याम् ॥ यथा । युक्ताष्टीकार्त्तिकेतु स्मृता गोपाष्ट

मी बुधे । तद्दिने वासुदेवोऽभू द्गोप पूर्वन्तु वत्सप ॥ तत्र कुर्या द्गवां पूजा गोग्रास गोप्रदक्षिणम् । गवानुगमन कार्यं सर्वान् कामान ऽभीप्सता ॥

गोपिका । स्त्री । गोपस्त्र्याम् ॥ गोपाय ति । गुपू॰। ण्वुल् ॥ गोप्याम् ॥

गोपित्तम् । न । गोरोचनायाम् ॥

गोपिनी । स्त्री । श्यामालतायम् ॥

गोपी । स्त्री । गोपस्त्रनार्याम् ॥ गोप स्य स्त्रीत्वर्थं पुंयोगादाख्यायामिति ङीष् ॥ शारिवायाम् ॥ रक्तिकाया म् ॥ रक्तिकायाम् । मूलप्रकृतौ ॥ गोपायति । गुपू॰। आयाभावे । प चाद्यच् । गौरादिङीष्॰ ॥

गोपीथ । पु । न । रक्षणे ॥ न । तीर्थे ॥ जलद्रोण्याम् ॥ गाव पिबन्त्यस्मि न् । पा॰। निशीथगोपीथावगथाद्द तिथक् ॥ गोपीथ.सोमपानमिति वेदभाष्यम् ॥

गोपुच्छ । पु । हारविशेषे ॥ गोलाङ्गू ले ॥ गोलाङ्गूलवानरे ॥

गोपुटा । स्त्री । स्थूलैलायाम् ॥

गोपुटिकम् । न । शिववृषस्यमस्तके ॥

गोपुरम् । न । पुरद्वारे ॥ द्वारमात्रे ॥ कैवर्त्तीमुस्तके ॥ गां जल पिपर्त्ति । पृपालनपूरणयो । मू॰ क.॥ गौर्न ल पुरमस्येतिवा ॥ यद्वा । पुरति । पुरअग्रगमने । इगुपधेति क. । ग वापुरम् ॥ गोपायति वा । गुपू॰। बाहु लकादुरच् ॥ यद्वा । गोपते । गुपमह त्वे । इगुपधत्वात् क । रलयोरभेद. गोभि पुरम् ॥ गा पुरति वा । पुर॰। मू॰ कोवा ॥

गोपुरक । पु । कुन्दुरुके । बहुगन्धे॥

गोपुरीषम् । न । गोमये ॥

गोपेन्द्र । पु । विष्णौ ॥ गोपराजे ॥

गोपेश । पु । शाक्यमुनौ ॥ गोपराजे ॥ नन्दघोषे ॥

गोप्ता । त्रि । रक्षके ॥ गोपायति । गुपू॰। तृच् ॥ श्रीकृष्णे ॥ सखिस्वमा यया स्वात्मान सवृणोति ॥

गोप्त्री । स्त्री । गोपिकायाम् ॥ रक्षि कायाम् ॥

गोप्य: । पु । दासीपुत्रे ॥ त्रि । रक्षणी ये ॥ गुह्ये ॥ सङ्गोपनीये ॥ यथा । आयु र्वित्तं गृहच्छिद्र मन्त्रमैथुन भेषजम् । अपमान तपो दान नव गोप्यानि यत्नत इति ॥ गुप्यते । गुपू॰। ऋहलोर्ण्यत् ॥

गोप्यक. । पु । दासे ॥ गोप्यात् स्वार्थे क. ॥ गोप्य कायति वा । कै॰। आतश्चोपक

गोप्याधि । पु । बन्धकविशेषे ॥ तथा च नारद: । अधिक्रियत इत्याधि.

स विज्ञेयो द्विलक्षणः । भूतकालो ऽपनेयश्च धार्यश्चेवात्र सथा ॥ स पुनर्द्विविध प्रोक्तो गोप्यो भोग्यस्तथैव च । गोप्योरक्षणीयः ॥

गोवाली । स्त्री । ओषधिविशेषे ॥ पाककर्णेतिङीष् ॥

गोभण्डीर' । पु । जलकुक्कुभखगे ॥

गोमक्षिका । स्त्री । मक्षिकाविशेषे । दृषे । डांस इतिभाषा ॥

गोमान् । त्रि । गवीश्वरे । गोमिनि ॥ बहवोगावोऽस्य । भूम्नि तदस्यास्तीतिमतुप् ॥

गोमतम् । न । गव्यूतौ ॥

गोमतल्लिका । स्त्री । प्रशस्तायांगवि ॥ प्रशसावचनैश्चेति नित्यसमास ॥

गोमती । स्त्री । स्वनामाख्यातायां नद्याम् । वाशिष्ठ्याम् ॥ वैदिकमन्त्रविशेषे ॥ उगितश्चेतिङीप् ॥

गोमन्त: । पु । विन्ध्यप्रत्यन्तपर्वते ॥

गोमय । पु । न । गोविष्ठि ॥ गो.पुरीषम् । गोश्चपुरीषे इतिमयट् ॥ अत्यन्तजीर्णदेहाया वन्ध्यायास्तु विशेषत । रोगार्त्ताया. प्रसूताया न गोर्गोमयमाहरेत् ॥

गोमयच्छत्रम् । न । शिलीन्ध्रके ॥

गोमयच्छत्रिका । स्त्री । उच्छिलीन्ध्रे । शिलीन्ध्रे । छिलीरे ॥

गोमयप्रियम् । न । भूतृणे ॥

गोमयोत्था । स्त्री । गोमयजातकीटविशेषे । गर्द्दभ्याम् । गोबरौला इति भाषा ॥

गोमायु । पु । शृगाले ॥ गन्धर्वविशेषे ॥ गां भिकृतां वाचं मिनोति । डुमिञ्० । कृवापेत्युण् ॥

गोमी । पुं । शृगाले ॥ बुद्धभिक्षुशिष्ये । आमलेरे ॥ त्रि । गोमति ॥ उपासके ॥

गोमीन: । पु । मत्स्यविशेषे ॥

गोमुख' । पु । मातलिपुत्रे ॥ वाद्यदेवगणान्तरे ॥ नक्रे ॥ यक्षविशेषे ॥ न । कुटिलागारे ॥ वाद्यभाण्डे ॥ लेपने ॥ चौरैःक्रियमाणे सुरङ्गाया' प्रभेदे ॥ जपमालागोपनाय पट्टवस्त्रादिनिर्मिते गोमुखी इति प्रसिद्धे यन्त्रविशेषे ॥ यथा । चतुर्विंशाङ्गुलमित पट्टवस्त्रादिसम्भवम् । निर्माया ऽष्टाङ्गुलिमुख ग्रीवां तत् षड्दशाङ्गुलम् ॥ चेयं गोमुखयन्त्रञ्च सर्वतन्त्रेषु गोपितम् । तन्मुखे स्थापयेन्मालां ग्रीवामध्यगतं करं ॥ प्रजपेद्विधिनागुह्यंवर्णमालाधिकंप्रिये । इति मुण्डमालातन्त्रम् ॥ गोमुखादै ततोमालां गोपयेन्मातृजारवत् । इति भयातन्त्रम् ॥

गोमुखी । स्त्री । मन्त्रजपार्थं कर्पटादि निर्मितगुप्तिकायाम् । गोमुखे ॥ राढ देशस्थनदीविशेषे ॥

गोमूत्रम् । न । गो.जले ॥ अस्यगुणाः । गोमूत्र कटु तीक्ष्णोष्ण क्षारं तिक्त कषायकम् । लघ्वग्निदीपन मेध्यं पित्तकृत् कफवातहृत् ॥ शूलगुल्मो दरानाहकण्डुक्षि मुखरोगजित् । कि लासगदवातामवस्तिरुक् कुष्ठनाशन म् ॥ कासश्वासापह शोथकामलापा ण्डुरोगहृत् ॥ * ॥ कण्डूकिलासग दशूलमुखाक्षिरोगान् गुल्मातिसा रमरुदामयमूत्ररोधान् । कासं सकु ष्ठजठरकृमिपाण्डुरोगान् गोमूत्र मे क मपि पीत मपाकरोति ॥ सर्वेष्व पिचमूत्रेषु गोमूत्र गुणतोधिकम् । अतो विशेषाकथने मूत्रं गोमूत्र मुच्यते ॥ प्लीहोदरश्वासकासशोथव र्चोग्रहापहम् । शूलगुल्मरुजानाह कामलापाण्डुरोगनुत् ॥ कषायं ति क्ततीक्ष्णञ्च पूरणात् कर्णशूलहृत् ॥

गोमूत्रिका । स्त्री । तृणविशेषे । क्षेत्र जायाम् । रक्ततृणायाम् ॥ चित्रका व्यविशेषे । यथा । गतिरुत्रावचा य त्र मार्गे मूत्रस्य गोरिव । गोमूत्रिके ति तत् प्राहु दुंष्कराञ्चित्रवेदिन ॥ अपिच । वर्णानामेकरूपत्त्व यद्ये कान्तरमर्द्धयो । गोमूत्रिकेति तत् प्राहु दुंष्करतद्विदोविदुरिति ॥ षो डशकोष्ठद्वये पङ्क्तिद्वये ऽर्द्धद्वय क्रमे ण विलिख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिर्भवतीत्युद्धार ॥

उदाहरणयथा ॥

| प्र | व्र | त्ते | वि | ग | स | द्दा | नं | सा | ध | ने | प्य | त्रि | षा | दि | भि । |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| व | ह | पि | वि | क | स | हा | न | यु | ध | ना | प्य | ति | षा | खि | भि ॥ |

इतिमाघे १९ सर्गे ४६ श्लोक ॥ अस्याश्चत्त्वारोभेदा' । पादगोमूत्रि का अर्द्धगोमूत्रिका श्लोकगोमूत्रिका विपरीतगोमूत्रिकेतिभेदा इति स रस्वतीकण्ठाभरणम् ॥

गोमेदः । पु । गोमेदकमणौ ॥ द्वीप विशेषे ॥ यथा । गोमेदे गोपति र्मा म राजा भूत्नोसवोद्यत । याज्यो ऽ भूद्वञ्जिकल्याना मौतघ्यानां मनो कुले ॥ स तेष हरियज्ञाय प्रवृत्तेषु भृगूनगुरून् । वव्रे न गौतम को पादशपत् सोऽगमत् क्षयम् ॥ य त्रवाटे ऽस्य ता गावो दग्धा कोपा ग्निना मुने. । तन्मेदसा मही छन्ना

गोमेद सततोऽभवदिति ॥

गोमेदक । पु । स्वनाम्ना प्रसिद्धे मणिविशेषे ॥ न । पीतमणौ ॥ राहुरत्ने । तमोमणौ ॥ अस्यपरीक्षा यथा । हिमालयेवा सिन्धौवा गोमेदमणिसम्भव । स्वच्छकान्तिगुरु स्निग्धो वर्णाढ्यो दीप्तिमानपि ॥ वक्ष्च पिञ्जरो धन्यो गोमेदइतिकीर्त्तित । चतुर्धा जातिभेदस्तु गोमेदेपि प्रकाश्यते ॥ ब्राह्मण शुक्लवर्णः स्यात् क्षत्रियोरक्तउच्यते । आपीतोवैश्यजातिस्तु शूद्रस्त्वानीलउच्यते ॥ छाया चतुर्विधा श्वेता रक्ता पीताऽसिता तथा ॥ गुरुप्रभाढ्य सितवर्णरूप स्निग्धो मृदुर्वातिमहापुरोक्त ॥ स्वच्छस्तु गोमेदमणि धंरताय करोति लक्ष्मी धनधान्य वृद्धिम् । लघु बिंरूपेऽतिखरोऽन्यमान से होपलिप्तो मलिन खरोपि ॥ करोति गोमेदमणि विनाश सम्पत्तिभोगावलवीर्य्यराशे ॥ ये दोषा हीरके प्रोक्तास्ते गोमेदमणावपि । परीक्षा वज्रित कार्या मणिवा रत्नकोविदै ॥ स्फटिकेनैवकुर्वन्ति गोमेदप्रतिरूपिणम् । शुद्धस्य गोमेदमणेस्तु मूल्यं सुवर्णतो द्वैगुणमाहुरेके । अन्येतथा विद्रुमतुल्यमूल्यं तथा परेत्वामरतुल्य माहु ॥ चतुर्विधानामेषान्तु धारणं परिसम्भतमिति ॥ काकोले ॥ पत्रके ॥

गोमेदसन्निभ । पुं । दुग्धपाषाणे ॥

गोमेध । पु । यज्ञविशेषे ॥ तस्यकलौनिषेधो यथा । अश्वालम्भं गवालम्भ सन्न्यासंपलपैतृकम् । देवराच्चसुतोत्पत्तिं कलौपञ्चविवर्जयेत् ॥

गोयुगम् । न । गोद्वये ॥ गवांयुगम् ॥

गोरक्ष । पु । नागरङ्गे । नारङ्गे ॥ ऋषभनामौषधौ ॥ त्रि । गोरक्षके । गोपे ॥ रक्षतीतिरक्ष । गो रक्ष. ॥

गोरक्षकर्कटी । स्त्री । चिर्भिटायाम् ॥

गोरक्षजम्बू । स्त्री । गोधूमे ॥ गोरक्षतण्डुलायाम् ॥ घोण्टाफले ॥

गोरक्षतण्डुला । स्त्री । गोरक्षचाउलिया इति गौडभाषाप्रसिद्धे क्षुद्रलताविशेषे । गाङ्गेरुक्याम् । नागबलायाम् ॥

गोरक्षतुम्बी । स्त्री । कुम्भतुम्ब्याम् ॥

गोरक्षदुग्धा । स्त्री । क्षुद्रक्षुपविशेषे । ताम्रदुग्धायाम् । बहुपत्रायाम् । अमृतसञ्जीवन्याम् ॥

गोरक्षी । स्त्री । क्षुद्रक्षुपविशेषे । गन्धबहुलायाम् । पञ्चपर्णिकायाम् ॥ गोरक्षदुग्धायाम् ॥ कुम्भतुम्ब्याम् ॥

गोरक्ष्यम् । न । पाशुपाल्ये ॥ गोरक्षतो

ति गोरच । तस्मात्का व्यम् ॥

गोरक्षु । पु । पक्षिविशेषे ॥ बकवके ॥ बन्दिनि ॥

गोरट' । पु । दुष्खदिरे ॥

गोरणम् । न । गुरणे । उद्यमे । भारा युद्यमने ॥ गूर उद्यमे । चु० । ल्युट् ॥

गोरस. । पु । दुग्धे ॥ दधि ॥ दधड़ा न्नते । घोले । तक्र ॥ गोरसस्य दु ग्धस्य विकारत्वात् उपचारात् ॥

गोरसजम् । न । तक्रे ॥

गोराटी । स्त्री ।
गोराटिका । स्त्री । } शारिकाविहगे ॥
गोरिका । स्त्री ।

गोरसम् । न । क्रोशयुग्मे ॥ गो'शब्दे ॥

गोरोचम् । न । हरिताले ॥

गोरोचना । स्त्री । स्वनामख्यातपीत वर्णद्रव्ये । शोभनायाम् । मङ्गलाया म् । मेध्यायाम् ॥ गोरोचनातिलका तिलका वश्या मङ्गलकान्तिदा । विषा ऽलक्ष्मीग्रहोन्मादगर्भस्रावक्षतास्र कृत् ॥

गोर्दम् । न । मस्तिष्के । मस्तकभवस्ने हे ॥ गुर्यते गुरतेवा । गुरी उद्यम ने । कव्यादय इतिसाधु ॥

गोल. । पु । सर्ववर्तुले ॥ मदनवृक्षे ॥ जारात् विधवासुते ॥ भूगोले ॥ ख गोले ॥ यथा । गोल गोलु वदि तव

मति र्भास्करीय शृणु ज्वमिति नि द्दिग्दि रोमणि ॥ एकराशौ षड्ग्रहयोगे ॥ यथा । षड्ग्रहा मेकस्मिन् यदि भव ति यस्मिं निवसति सदा गोलोयो । ग प्रवदपद मिन्द्रोपि लभते भ वे लोको रक्ष परिहरति पुत्रञ्च जननी स्वपाशौ न य. स्तज्ज्वल ति वसुधा शुष्यतिनदीति ॥ एकरा शौ सप्तग्रहयोगे ॥ यथा । सप्तग्रहा यदैकस्था गोलयोग सदाभवेत् । दुर्भिक्ष राष्ट्रपीडाच तस्मिन् काले क्षयञ्च ॥ इति ॥ न । मण्डले ॥ गुडे च । लयोरभेद' ॥

गोलक' । पु । जारतोद्धिधवासुते ॥ म णिके । अलिञ्जरे । गोल इतिभाट इ तिचभाषा ॥ गुडे ॥ पिण्डे ॥ यथा । ते जसा गोलक सूर्यौग्रहर्क्षाण्यम्बु गो लका. । प्रभावन्तो हि दृश्यन्ते सूर्य रश्मिविदीपिता ॥ इतिसूर्यसिद्धान्त ॥ गन्धरसे । बोले ॥ न । गोलोके ॥ गुल्यते । गुडरचायाम् । वञ् । स्वा र्थेकन् । डलयोरैक्यम् ॥

गोलञ्चयम् । न । गवा प्रशस्ताप्रशस्त स्वरूपे ॥ यथा । परापर' प्राक्च वृ- हद्रथाय गोलञ्चय तत् क्रियते ततो ऽयम् । मया समास' शुभलक्षणा- क्ता सर्वां स्तथा व्यागमतो ऽभिधा

स्ये ॥ अशुभलक्षणा गावश्चाह । सा
स्रुाविलरूक्षाक्ष्यो मूषिकनयनाश्च
न शुभा गाव. । प्रचला स्फिपिटवि-
षाणा करटा खरसदृशवर्णा स्व ॥
दशसप्तचतुर्दन्त्यः प्रलम्बमुण्डानना
विनतपृष्ठा । ह्रस्वस्थूलग्रीवायवम-
ध्या दारित खुराश्च ॥ श्यावातिदी
र्घजिह्वा गुल्फै रतितनुभि रति
स्थूलैर्वा । अतिककुदा' कृशदेहा
नेष्टा हीनाधिकाङ्ग्यश्च ॥ ४ ॥ अथ
वृषलक्षणम् । वृषभोऽप्येवंस्थूलातिद
न्तवृषश्च' सिराततक्रोड । स्थूलसि
राचितगण्ड स्त्रिस्थूलं मेहतेयश्च ॥
मार्जाराक्ष कपिलः करटो वा न
शुभदो द्विजस्येव । कृष्णोष्ठताल्वाजि
ह्व श्वसनो यूथस्य घातकर: ॥ ६ ॥
स्थूलशकृन्मणिशृङ्ग सितोदर: कृष्ण
सारवर्णश्च । गृहजातोऽपि त्याज्यो
यूथविनाशावहो वृषभ' ॥ ७ ॥ श्या
मकपुष्पचिताङ्गो भस्मारुणसन्निभो
विडालाक्ष: । विप्राणा मपि न शु
भंकरोति वृषभ' परिगृहीत: ॥ ये
चोद्धरन्ति पादान् पङ्कादिव योजि
ता. कृशग्रीवा: । कातरनयना ही
नाश्च पृष्ठत स्ते न भारसहा: ॥ ८ ॥ अ
थशुभलक्षणसंहितानाह । मृदुसंह
तताम्रोष्ठा स्तनुस्फिज स्ताम्रतालुजि



ह्वाश्च । ह्रस्वतनूच्चश्रवणा: सुकुक्षय:
स्पृष्टजङ्घाश्च ॥ आताम्रसंहतखुरा व्यू
ढोरस्का वृहत्ककुदयुक्ता । स्निग्धश्ल
क्ष्णतनुत्वग्रोमाण स्ताम्रतनुशृङ्गा: ॥
तनुभूस्पृग्वालधयो रक्तान्तविलोच
ना महोच्छ्वासा: । सिंहस्कन्धा स्त
न्वल्पकम्बला' पूजिता' सुगता: ॥
११ ॥ वामावर्तैर्वामे दक्षिणपार्श्वे
च दक्षिणावर्तै । शुभदा भवन्त्यन
डुहो जङ्घाभिश्चैणकनिभाभि' ॥ वै
दूर्यमल्लिकाबुद्बुदेक्षणा: स्थूलनेत्र
तारान' । पार्ष्णिभि रस्फुटिताभि: श
स्ता. सर्वे च भारसहा' ॥ घ्राणोद्दे
शे सवलि मार्जारमुख' सितश्च द
क्षिणत: । कमलोत्पललाक्षाभ' सु
वालधि र्वाजितुल्यजव' ॥ लम्बै र्वृष
णै र्मेषोदरैश्च सङ्क्षिप्तवङ्क्षणक्रोड:
। ज्ञेयो भाराध्वसहो जवेऽश्वतुल्य
श्च शस्तफल: ॥ १५ ॥ सितवर्ण' पिङ्ग
च स्ताम्रविषाणेक्षणो महावक्त्र: । हं
सो नाम्न शुभफलो यूथस्य विवर्द्धन
प्रोक्त ॥ १६ ॥ भूस्पृग्वालधि राता
म्रविषाणो रक्तदृक् ककुद्मांश्च । क
ल्माष श्च स्वामिन मचिरात् कुरु
ते पतिं लक्ष्म्या' ॥ १७ ॥ योवा सि
तैश्च चरणै र्यथेष्टवर्णश्च सोपि शु
भफलकृत् । मिश्रफलोऽपि शस्तो

यदि नैकान्तप्रशस्तोऽपि ॥ १८ ॥

इति वाराहीसंहितायां गोलक्षणनामाष्टपञ्चाशोऽध्याय ॥ ५८॥

गोला । स्त्री । गोदावर्याम् ॥ सख्याम् ॥ कुनव्याम् ॥ दुर्गायाम् ॥ पत्राञ्जने ॥ मण्डले ॥ अलिञ्जरे ॥ वालखेलने । वालक्रीडनकाष्ठे ॥ गां दीप्तिं लाति । ला० । आतइति कः ॥ गुड्यते वा । गुडवेष्टने । घञ् । डलयोरैक्यम् ॥

गोलाङ्गूल । पु । असितमुखे कपिविशेषे । कपित्थाख्ये । दधिशोणे ॥ कृष्णवानरे ॥

गोलास । पु । शिलीन्ध्रे ॥

गोलिह । पु । घण्टापाटलौ ॥

गोलीढ । पु । लोध्रविशेषे । घण्टापाटलौ ॥ गोभिर्लिह्यतेऽस्य । लिह० । क्त ॥

गोलोक । पु । न । श्रीकृष्णस्य नित्ये धामनि ॥ श्रीकृष्णस्थाने ॥ यथा । वैकुण्ठस्य दक्षभागे गोलोकं सर्वमोहनम् । तत्रैव राधिका देवी द्विभुजो मुरलीधर ॥ यद्रूपं गोलकं धाम तद्रूपं नास्ति भामके । स्थाने वा चक्षुषो किं वा ध्यानयोगे न विद्यते ॥ मुद्गतस्वमयं देवि नानादेवेन शोभितम् । मध्यदेशे गोलकाख्यं श्रीविष्णो सौभमन्दिरम् ॥ श्रीविष्णोः स्वरूपस्य यत् स्थानं चित्तमोहनम् । तत्स्थानस्य माहात्म्यं किं मया कथ्यतेऽधुनेत्यादि माहात्म्यादिकं तन्त्रशास्त्रे ब्रह्मवैवर्त्तपुराणे च द्रष्टव्यम् ॥

गोलोमिका । स्त्री । गोधुमा इति पार्वती इति च गौडभाषाप्रसिद्धे क्षुद्रक्षुपविशेषे । क्रोष्टुकपुच्छिकायाम् । प्रसारिण्याम् ॥

गोलोमी । स्त्री । श्वेतदूर्वायाम् ॥ गोलोमसु जाता । तत्रजात इत्यण् ॥ वचायाम् ॥ भूतकेशे ॥ गोलोमानिव । तस्येदमित्यण् । सभापूर्वकत्वाद्वृद्धिः ॥ वेश्यायाम् ॥ गोलोमा- स्या । गोशब्दो गोलोमसदृशे लाक्षणिक । अनउपधालोपिन इति ङीप् ॥ गोलोमिकायाम् ॥

गोवत्सादी । पु । वृके ॥

गोवन्दनी । स्त्री । प्रियङ्गौ । फणिज्याम् ॥ गविभूमौ वन्द्यते । वदि० । कर्मणि ल्युट् ॥ पीतदण्डोत्पले ॥

गोवरम् । न । गोमयविशेषे ॥ गोष्ठान्त गोखुरक्षुण्ण शुष्कचूर्णितगोमयम् । गोवर तत् समाख्यातं वरिष्ठं रससाधने ॥

गोवर्द्धन । पु । स्वनाम्ना प्रसिद्धे पर्वतविशेषे । गिरिराजे ॥ यथाहि हरि

दाघो ऽयं भूधरो नास्ति संशय । शुक्ल प्रतिपदि प्रात कार्त्तिके ऽर्च्यो ऽत्रवे-श्रवै ॥ पूजामन्त्रस्तु । गोवर्द्धनध राधारगोकुलत्राणकारक । विष्णु बाहुकृतोच्छ्रायोगवां कोटिप्रदो भवेति ॥ त्रि । गोवर्द्धके ॥ गवां वर्द्धने ॥

गोवर्द्धनधर । पु । श्रीकृष्णे । नन्दनन्दने ॥ गोवर्द्धनस्य गिरे धरो धारक ॥

गोवर्द्धनधारी । पु । श्रीकृष्णे । यशोदानन्दने ॥

गोवशा । स्त्री । वन्ध्यायाङ्गवि ॥

गोविन्द । पुं । वासुदेवे ॥ तद्ध्यानं यथा । फुल्लेन्दीवरकान्ति मिन्दुवदनं वर्हावतंसप्रियं श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् । गोपीनां नयनोत्पलार्चिततनुं गोगोपसङ्घावृतं गोविन्दं कलवेणुवादनपरं दिव्याङ्गभूषं भजेदिति ॥ गोशब्दवाच्यानि इन्द्रियाणि नियन्तृं प्राप्तो ॥ गां वेदलक्षणां वाणीं विन्दति इति व्युत्पत्त्या सर्ववेदोपादानत्वेन सर्वज्ञे ॥ गां भुवं धेनुं स्वर्गं वेदं वा अविदत् विन्दति वा । विद° विदॢ° । गवादिषु विन्देः संज्ञायामिति श° । वाराहरूपेणोद्धरणात् कामधेनोरैश्वर्यप्राप्ते । इन्द्रेणस्वर्गस्य निवेदनात् मत्स्यादिरूपेण वेदोद्धरणाद्वा ॥ गोभिर्वाणी भिर्वेदान्तवाक्यैर्विन्दते वा । गोभिरेव यतो वेद्यो गोविन्द समुदाहृत इति विष्णुतिलकम् ॥ वह्निपुराणे यमानुशासने तन्नाममाहात्म्य यथा । ये तिष्ठन्त स्वपन्तश्च गच्छन्त स्खलिते क्षुते । सङ्कीर्त्तयन्ति गोविन्दं ते वश्याज्या सुदूरतः इति ॥ गवाध्यक्षे ॥ बृहस्पतौ ॥

गोविन्दद्वादशी । स्त्री । फाल्गुनशुक्लद्वादश्याम् ॥

गोविट् । पु । गोमये ॥ गोविंट् ॥

गोविष्ठा । स्त्री । गोमये ॥ वनोपले । गोर्विष्ठा ॥

गोवीथी । स्त्री । मध्यममार्गे नक्षत्रविशेषाणां संज्ञाविशेषे ॥ यथा । ह स्तश्चित्रा तथा स्वाती गोवीथीति तु शब्दितेति ॥

गोवृन्दम् । न । गोसमूहे ॥

गोशकृत् । न । गोमये ॥

गोशरण्य । पु । व्याघ्रादितो दुर्गोश गो परित्राणकारके ॥ गो गवां वा शरण्य ॥

गोशालम् । न । गोगृहे ॥ गवां शाला । विभाषासेनेति पाक्षिक क्लीवत्वम् ॥ त्रि । गोशाले जाते ॥ स्थानान्तगोशालेति जातार्थप्रत्ययस्य लुक् ॥

गोशाला । स्त्री । गोशाले । गौशाला

इतिभाषा ॥ गवां शाला ॥

गोशीर्षम् । न । चन्दने ॥ चन्दनविशेषे । हरिचन्दने ॥ गोशीर्षाकारेमलयै कदेशेजाते कालताम्रश्यामिश्रवर्णो उत्पलगन्धिनि अतिसुरभिशीतलतया सदैव सर्पैर्वेष्टिते इति व्याख्यातार ॥ गो शीर्षमिवगोशीर्षांगिरिस्तत्राकर इति स्वामी॥ गवांमस्तके ॥

गोशीर्षक । पु । द्रोणपुष्पीवृक्षे ॥ कपभाद्रिसमुद्भवे गोरोचनासदृशवर्णे चन्दनजातिविशेषे ॥ गोमस्तके ॥

गोशृङ्ग । पु । बर्बुरवृक्षे ॥ न । गोर्विषाणे ॥

गोश्रुति । पु । वैयाघ्रपद्येकषिविशेषे ॥

गोष्ठम् । न । गवांस्थाने ॥ गावस्तिष्ठन्त्यत्र । ष्ठा॰। घनर्थे इति सुपिस्थ इति वा क । अम्बाम्बेतिषत्वम् ॥ विद्वधिष्ठिताहङ्कारे॥गाव ओवादीनीन्द्रियाणि तिष्ठन्त्यत्रेति पूर्ववत् प्रक्रिया ॥ गोष्ठीश्राद्धे ॥

गोष्ठपति । पु गवांस्थानाध्यक्षे ॥

गोष्ठश्व । पु । परहिंसके । य स्वगृहाङ्गनेश्विव परान्द्वेष्टितस्मिन् ॥ गोष्ठेश्वा इति सप्तमीतत्पुरुषे अचतुरेत्यादिनाऽच् । मस्त्रहितइतिटिलोप ॥ षष्ठीतत्पुरुषेतु गोष्ठश्वाइत्येव॥

गोष्ठाष्टमी । स्त्री । गोपाष्टम्याम् ॥

गोष्ठी । स्त्री । सभायाम् । परिषदि॥ सलापे॥ पोष्यवर्गे ॥ विष गोष्ठी दरिद्रस्य ॥ गावोऽनेकावाच स्तिष्ठन्त्यस्याम् । घनर्थेक । अम्बाम्बगोभूमीतिषत्वम् । गौरादित्वात् ङीष ॥

गोष्ठीपति । पु । पोष्यवर्गाभिपालके ॥ सभापतौ ॥

गोष्ठीभेद । पु । क्रीडाविशेषे ॥

गोष्पदम् । न । गोखुरश्वभ्रे ॥ त्रि । गवां गतिगोचरे ॥ गोपद प्रमाणे ॥ गो पदम् । गाव पद्यन्ते यस्मिन् देशे स गोभि सेवितो गोष्पद । गोष्पदसेवितासेवितप्रमाणेष्विति सुट् सस्यषत्वञ्चनिपात्यते । असेविते अगोष्पदान्यरण्यानि । प्रमाणे गोष्पदमात्रंक्षेत्रम् ॥

गोस । पु । बोले ॥ उष काले । विभाते ॥ गां जल स्यति । घोऽन्तकर्मणि । आत इतिक ॥

गोसङ्ख्य । पु । गोपे ॥ गाव सञ्चष्टे । चक्षिङ् । चक्षिङ ख्याञ । समिख्य इतिक: ॥

गोसदृक्ष । पु । गवये ॥

गोसन्दाय । पु । गोदानकर्तरि ॥

गोसम्भवा । स्त्री । श्वेतदूर्वायाम् ॥ त्रि ।

गोर्जाते ॥

गोसर्गः । पु । प्रभाते ॥

गोसव । पु । गोमेधयज्ञे ॥

गोस्तन । पु । चतुर्यष्टिकहारे ॥ गो। कुचे ॥

गोस्तनी । स्त्री । कपिलद्राक्षायाम् । द्राक्षायाम् । मनक्कादाख इतिभाषा ॥ गौः स्तनोऽस्याः । गोस्तनसदृशे गाशब्दो गौणः । स्वाङ्गाच्चोपसर्जनादिति ङीष् ॥

गोस्थानम् । न । गोष्ठे ॥ गवास्थानम् ॥

गोस्थानकम् । न । गोष्ठे ॥ स्वार्थेकः ॥

गोस्वामी । त्रि । गोपतौ ॥

गोहलम् । न । गोमये ॥

गोहरीतकी । स्त्री । विल्वे ॥

गोहालिया । स्त्री । गोवालिया इति ख्याते लताविशेषे ॥

गोहित । पु । घोषलतायाम् ॥ विल्वे ॥ श्रीकृष्णे ॥ गवा विरक्षार्थं गोवर्द्धनगिरिं धृतवान् इतिगोभ्योहित. । चतुर्थीतदर्थे त्यादिना चतुर्थी तत्पुरुष । गोभूमे भौरावतरणेच्छया शरीर ग्रहणंकुर्वन् वा हित. ॥ त्रि । गवा हितकारके । गोग्रासाहर्त्तरि ॥

गोहिरम् । न । पादमूले ॥

गौञ्चः । पु । मेनासुते । मैनाके ॥ गौर्या हिमालयपत्न्या. अपत्यम् । स्त्रीभ्योढगिति ढकिप्राप्ते छन्दसि व्यत्ययो बहुलमिति व्यत्ययेन गर्गादिभ्योयञितियञ् ॥

गौञ्जिक । पु । स्वर्णकारे ॥ गुञ्जाव हर्त्तरि ॥

गौड. । पु । देशविशेषे ॥ तद्देशसीमा यथा । वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे । गौडदेशः समाख्यात. सर्वविद्याविशारद. ॥ तद्देशस्थे पुंभूम्नि गौडा ॥ ते च पञ्चोक्ता स्कान्दपुराणे । सारस्वता कान्यकुब्जाः गौड मैथिलकौत्कला । पञ्चगौडा इति ख्याता विन्ध्यस्योत्तरवासिन. इति ॥

गौडवास्तुक. । पु । न । वास्तूक प्रभेदे ॥ तदेवतु इहत् यच रक्त स्याद्गौडवास्तुकम् ॥

गौडिक । पु । इक्षुकुट्टके ॥ इक्षौ ॥ गुडेसाधु । गुडादिभ्यष्ठञ् ॥ न । मद्यविशेषे ॥

गौडी । स्त्री । सुराप्रभेदे । वालकल्याम् ॥ रागिणीविशेषे । मेघरागस्य योषिति ॥ काव्यरीतिप्रभेदे ॥ यथा । ओज प्रसादमाधुर्यं गुणत्रितयभेदत । गौडवैदर्भपाञ्चालरीतय. परिकीर्त्तिता इति ॥

गौण. । त्रि । गुणयोगात्प्रवृत्ते ॥ अमु

ख्ये ॥ श्लोपपादितेर्थे ॥ गुणादागत । अण् ॥

गौणधातु । पु । उपधातौ ॥

गौणसन्न्यासी । स्त्री । अत्यागिनि । कर्मफलत्यागित्वेपिकर्मानुष्ठायिनि । अन्ये ॥

गौणी । स्त्री । वृत्तिविशेषे ॥ लक्षणेति प्रकारलक्षणान्तर्गतलक्षणाविशेषे ॥ पद्यात साहित्यदर्पणम् ॥

गौतम । पु । नचिकेतस. पितरि मुनिविशेषे । उद्दालके गोतमो गौतम इति प्रसिद्धे ॥ मुनिविशेषे । शतानन्दे ॥ शाक्यवंशावतीर्णे बुद्धमुनिविशेषे । शाक्यसिंहे । गौतोदनौ ॥ कृपे ॥ गौतमस्यायंशिष्य । तस्येदमित्यण् । तद्गोत्रावतारत्वा ॥ गोतमस्यापत्ये । ऋष्यण् । बहुत्वे गोतमा ॥

गौतमसम्भवा । स्त्री । गोदावर्यां नद्याम् ॥

गौतमी । स्त्री । उमायाम् । दुर्गायाम् ॥ गोरोचनायाम् ॥ गोदावर्याम् ॥ कृप्याम् ॥ शाक्यलक्षणगौतमप्रणीतायां विद्यायाम् ॥ षोडशपदार्थप्रतिपादिकायामक्षपादतिगौतमप्रोक्तान्तर्थविद्यायाम् ॥ शार्ङ्गरवाद्यणो ङीन् ॥ राक्षसीविशेषे ॥

गौतम । पुं । स्थावरविषस्य प्रभेदे ॥

गौधार । पु । गोधिकासुते । अजगरो गोधायाजाते चन्दनगोहेतिख्याते ॥ गोधाया अपत्यम् । आरगुदीचामित्यारक् ॥

गौधूम । पुं । गोधूमविकारे ॥ गोधूमस्यावयवो विकारो वा । बिल्वादिभ्यण् ॥

गौधूमीनम् । न । गोधूमक्षेत्रे ॥ गोधूमानां भवनं क्षेत्रम् । धान्यानांभवनेक्षेत्रेखञ् ॥

गौधेय. । पु । गोधिकात्मजे । गौधेरे ॥ गोधाया अपत्यम् । शुभ्रादिभ्यो ढक् ॥

गौधेर । पु । गौधारे ॥ गोधायाः अपत्यम् । गोधायाढ्रक् ॥

गौर । पुं । श्वेतसर्षपे ॥ चन्द्रे ॥ धववृक्षे ॥ अरुणवर्णे ॥ गौरा इतिख्याते पीतिवर्णे ॥ श्वेतवर्णे ॥ त्रि । तत्तद्वर्णवति ॥ विशुद्धे ॥ न । पद्मकेसरे ॥ कुङ्कुमे ॥ स्वर्णे ॥ गुरति गवते मनोऽत्र वा । गुरीउद्यमने गुङ्गतौ वा । ऋज्रेन्द्रेतिसाधु. ॥ गूर्यते ऽनेन वा । गुरी० । हलश्चेति घञ् । गौरएव । प्रज्ञाद्यण् ॥

गौरव्यम् । न । पाशुपाल्ये ॥

गौरजीरकः । पु । अजाज्याम् । श्वेतजीरके ॥

गौरतित्तिर । पुं । कपिञ्जले ॥

गौरत्वक । पु । इङ्गुदीवृक्षे ॥

गौरवम् । न । अभ्युत्थाने ॥ गुरुत्वे । लाघवाभावे ॥ गुरोर्भावः । इगन्ता च्चलघुपूर्वादित्यण् ॥

गौरवित । त्रि । आर्यमिश्रे ॥ गौरव सञ्जातोऽस्य । तारकादित्वादि तच् ॥

गौरशाक । पु । गिरजमधूके । अल्प पत्रे ॥

गौरसर्षप । पु । श्वेतसर्षपे । सिद्धार्थे ॥ गौरश्चासौसर्षपश्च ॥ त्रिभी राज सर्षपै परिमिते ॥

गौरसुवर्णम् । न । चित्रकूटप्रसिद्धे प त्रशाकप्रभेदे । वारिजे । गन्धशाके ॥

गौरा । स्त्री । गौर्याम् । शिवायाम् ॥ हरिद्रायाम् ॥

गौराद्रैक । पु । स्थावरविषविशेषे ॥

गौरास्य । पु । कृष्णवानरे ॥

गौरिका । स्त्री । अष्टवर्षीयाकन्याया- म् ॥ गौर्येव । क. ॥

गौरिल । पु । सिद्धार्थे ॥ लौहचूर्णे ॥

गौरी । स्त्री । पार्वत्याम ॥ योगाग्नि दग्धदेहा या पुनर्जाता हिमालये । शङ्खेन्दुकुन्दधवला ततो गौरीति सा स्मृता ॥ असञ्जातरजः कन्यायाम् ॥ हरिद्रायाम् ॥ दारुहरिद्रायाम् ॥ गोरोचनायाम् ॥ प्रियङ्गुवृक्षे ॥ व- सुधायाम् ॥ नदीविशेषे ॥ वरुणभा र्यायाम् ॥ बुद्धशक्तिविशेषे । माया देव्याम् ॥ मञ्जिष्ठायाम् ॥ श्वेतदूर्वा याम ॥ मल्लिकायाम् ॥ तुलस्याम् ॥ सुवर्णकदल्याम् ॥ आकाशमास्याम् ॥ रागिणी विशेषे । मालवरागभार्या याम् ॥ गौरवर्णान्वितायाम् ॥ गूयते । गुङ्शब्दे । ऋज्रेन्द्रेतिरन्प्रत्ययो गौ रो निपातित । गौरोवर्णोऽस्त्यस्याः । गौरादित्वात् ङीष् ॥

गौरीगुरु । पुं । हिमवति ॥ गौर्या गुरु ॥

गौरीजम् । न । अभ्रके ॥

गौरीतक्रम् । न । तक्रविशेषे ॥ यथा । लवणं मरिचं विश्वं जीरं नार ङ्गजन्वचम् । एलाचूर्णान्वितं तक्रं धूपयेद् घृतहिङ्गुना ॥ पार्वत्या वि हितं तक्रं सर्वदोषनिवर्हणम् । सुरु च्यं पावनं दिव्यं महेशस्य महत्प्रि यमिति ॥

गौरीपुत्र । पु । कार्त्तिकेये ॥ गणेशे ॥

गौरीपुष्प । पु । प्रियङ्गुवृक्षे ॥

गौरीललितम् । न । हरिताले ॥

गौरीशिखरम् । न । तीर्थविशेषे ॥

गौरीसुत । त्रि । दशवर्षोढात्मजे ॥

गौरुतल्पिक । पु । गुरुस्त्रीगामिनि ॥ गुरुतल्पं गच्छति । गच्छतौ परदा

गादिभ्यः इति ठक् ॥

गैाल्मिक । पु । मुष्ककदृचे ॥

गैाल्यम् । न । मधुरे ॥

गैाग्रतिक । त्रि । गोग्रतस्वामिनि ॥

गैाष्ठीनम् । न । भूतपूर्वगोष्ठे ॥ पूर्वंभूत गोष्ठम् । गोष्ठात् खञ्भूतपूर्वे इतिखञ् ॥ तीर्थविशेषे ॥

ग्रथित । त्रि । गुम्फिते । दृब्धे । कृतग्रन्थने । गाँथा इतिगूथा इतिचभाषा ॥आक्रान्ते ॥ हते । हिंसिते॥ ग्रथ्यतेस्म । ग्रन्थसन्दर्भे । क्त

ग्रथितमाल । पु । वद्धपङ्क्तौ ॥

ग्रन्थ । पु । गुम्फे । ग्रन्थनायाम् ॥ धने ॥ शास्त्रे ॥ अक्षरसङ्ख्यायाम् । द्वात्रिंशदर्णनिर्मितौ । अनुष्टुप्श्लोके ॥ प्रबन्धे । विवचितार्थप्रतिपत्त्यनुकूलत्वे सति निबद्धमानवाक्यसमुदाये । सन्दर्भे ॥ ग्रन्थनम् । ग्रन्थ० । घञ् ॥

ग्रन्थक । पु । द्वात्रिंशदक्षरान्विते अनुष्टुप्छन्द श्लोके ॥ सञ्ज्ञायांकन् ॥

ग्रन्थकर्त्ता । पु । ग्रन्थकारे ॥

ग्रन्थकुटी । स्त्री । लेख्यभूमौ । लेख्यस्थाने । दफतरखाना इति आफिस् इतिच रूपराज्जनभाषा ॥

ग्रन्थनम् । न । गुम्फने । ग्रन्थने । सन्दर्भे ॥

ग्रन्थना । स्त्री । ग्रन्थने ॥

ग्रन्थसन्धि । पु । काण्डे ॥ पटले ॥ स्थाने ॥ प्रकरणे ॥ पर्वणि ॥ अध्याये ॥ आह्निके ॥ उल्लासे ॥

ग्रन्थि । पु । ग्रन्थिपर्णे ॥ गाँठ इति भाषा प्रसिद्धे वस्त्रादिबन्धे ॥ वंशादिसन्धौ । पर्वणि । पोरी इति भाषा ॥ भद्रमुस्तायाम् ॥ हिंतावल्याम् ॥ पिण्डालौ ॥ कौटिल्ये ॥ अन्योन्याध्यासे ॥ मायाख्यपाशे ॥ रुग्भेदे ॥ ॥ तस्य निदानसम्प्राप्ती यथा । वातादयो मांसमसृक्प्रदुष्टा सन्दूष्य मेदश्च तथा शिराश्च वृत्तोन्नतं विग्रथितन्तु शोथ कुर्वन्त्यतो ग्रन्थिरितिप्रदिष्ट इति॥ग्रन्थते। ग्रन्थि० । सर्वधातुभ्यइन्॥खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिचरिभ्यश्चेति इर्वा । स्वरभेद ॥

ग्रन्थिक । पु । करीरे ॥ दैवज्ञे ॥ सहदेवपाण्डवे ॥ न । पिप्पलीमूले॥ ग्रन्थिपर्णे ॥ पु । न । गुग्गुलौ ॥ ग्रन्थिप्रतिकृति । इवेप्रतिकृताविति कन् ॥

ग्रन्थिका । स्त्री । पिप्पलीमूले ॥

ग्रन्थित । त्रि । ग्रथिते । गुम्फिते ॥ ॥ ग्रथ्यतेस्म । ग्रथि० । क्त ॥

ग्रन्थिदला । स्त्री । मालाकन्दे ॥

